पूर्णेन्दुमास्यं विदधुः पुनस्ते पुनर्मुखीचक्रुरनिद्रमब्जम् ।
स्ववक्त्रमादर्शतलेऽथ दर्शं दर्शं बभञ्जुर्न तथातिमञ्जु ॥ २० ॥

तेषां तथा लब्धुमनीश्वराणां श्रियं निजास्येन नलाननस्य ।
नालं तरीतुं पुनरुक्तिदोषं बर्हिर्मुखानामनलाननत्वम् ॥ २१ ॥

---

परस्परेण नानुमेने । अतिप्रयासेनापि नलतुलां नारोढुमिच्छेत्यर्थः । बतेति खेदे । तथा हि स्वाभाविकात् स्वभावसिद्धाद्रूपात् क्रियया निर्वृत्तं कृत्रिमं कृतकं रूपं ड्वितः क्त्रिः, "त्रेर्मम्नित्यम्" इति क्त्रिमप् च । अन्यद्विलक्षणमेव हीनमेवेत्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १९ ॥

**पूर्णेन्दुमिति** ॥ ते देवाः पुनः पूर्णेन्दुं पूर्णचन्द्रमेवास्यं विदधुः आस्यं चक्रुः । तथा पुनरनिद्रं विकचमब्जं पद्मं मुखीचक्रुः । नलमुखसाम्यलाभाय पुनश्चन्द्रेण पद्मेन च मुखानि निर्ममुरित्यर्थः । अथानन्तरं स्ववक्त्रमादर्शतले दर्पणान्तर्दर्शं दर्शं दृष्ट्वा दृष्ट्वा पुनःपुनर्दृष्ट्वेत्यर्थः । आभीक्ष्ण्ये णमुल् द्विर्वचनं च । तथा नलमुखवदतिमञ्जु अतिसुन्दरं नेति बभञ्जुर्भग्नं चक्रुः निनिन्दुरित्यर्थः । अत्र पूर्णेन्द्वादिकारणसामान्येऽपि विवक्षितकार्यानुत्पत्तिकथनाद्विशेषोक्तिरलङ्कारः । "तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यत" इति लक्षणात् ॥ २० ॥

**तेषामिति** ॥ तथा तेन प्रकारेण निजास्येन प्रयोज्येन नलाननस्य श्रियं लब्धुं लम्भयितुमिति णिजर्थो ग्राह्यः । यद्वा निजास्येन साधनेन तां श्रियं लब्धुं प्राप्तुमनीश्वराणां बर्हिर्मुखानामग्निवक्त्राणां, "अग्निमुखा वै देवाः' इति श्रुतेः । 'बर्हिर्मुखाः क्रतुभुजः, बर्हिरशुष्मा कृष्णवर्त्मा' इति चामरः । तेषामिन्द्रादीनां सम्बन्धि नलस्याननमिव आननं येषां ते नलानना इत्युपमानपूर्वपदो बहुव्रीहिः । ते न भवन्तीत्यनलाननाः तेषां भावः तत्त्वं तादृङ्मुखरहितत्वं (कर्तृ) अन्यत्र, अनलोऽग्निरेवाननं येषामित्यनलपदपूर्वपदो बहुव्रीहिः, तेषां भावस्तत्त्वमग्न्येकमुखत्वं (कर्तृ) पुनरुक्तिरेव दोषः तं तरीतुं अतिलङ्घितुं नालं न समर्थम् । नलाननत्वोद्योगेऽपि पूर्वसिद्धमनलाननत्वमेवावशिष्टम् । न तु नलाननत्व-

प्रियावियोगक्वथितात् किमैलाच्चन्द्राद्गृहीतैर्ग्रहपीडितात्ते ।
ध्माताद्भवेन स्मरतोऽपि सारैः स्वङ्कल्पयन्ति स्म नलानुकल्पम् ॥

नलस्य पश्यत्वियदन्तरं तैर्भैमीति भूपान् विधिराहृतास्थै ।
स्पर्धां दिगीशानपि कारयित्वा तस्यैव तेभ्यः प्रथिमानमाख्यत् ॥

---

सम्भावनापीत्यर्थः । द्वयोरप्यनलाननत्वयोर्भेदेऽपि श्रियैकपदोपादानमहिम्नैकत्वा-भिमानात्पौनरुक्त्यव्यपदेशः । अत्र नलाननश्रीलिप्सूनां तेषां न केवलं तदलाभः प्रत्युत दुस्तरतरपुनरुक्तिदोषरूपानर्थोत्पत्तिश्चेति द्वितीयो विषमप्रभेदः । यत्रा-नर्थस्य वा भवेदिति लक्षणात् ॥ २१ ॥

**प्रियेति** ॥ ते देवाः प्रियावियोगेनोर्वशीविरहाग्निना क्वथितात् दग्धा-दैलादिलात्मजात्पुरूरवसः कर्पूरादेरिवेति भावः । तथा ग्रहपीडिताद्राहुनिष्पीडिता-च्चन्द्राच्च यन्त्रनिष्पीडितात्तिलसर्षपादेरिवेति भावः । भवेन हरेण ध्मातात् मुख-मारुतसन्धुक्षिताग्निदग्धात् स्मरतोऽपि कामाच्च खदिरकाष्ठादेरिवेति भावः । गृहीतैरुपात्तैः सारैः साधनैः स्वमात्मानं नलस्यानुकल्पं कल्पयन्ति स्म किमित्यु-त्प्रेक्षा । अन्यथा तदनुकल्पतापि कुत इति भावः । मुख्यः स्यात् प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः' इत्यमरः ॥ २२ ॥

**नलस्येति** ॥ विधिर्ब्रह्मा नलस्य तैर्भूपैः सह इयत् अन्तरं तारतम्यं इयं भैमी पश्यत्विति हेतोः एतान् भूपानाहृत आहृतवान् । हरतेर्लुङि तङ् ह्रस्वादङ्गात् इति सिज्लोपः । किञ्च दिगीशानपि स्पर्धां कारयित्वा दिगीशैरपि नलेन सह मत्सरङ्कारयित्वेत्यर्थः । हृक्रोरन्यतरस्यामिति विकल्पादणिकर्तुः कर्मत्वम् । तस्य नलस्यैव तेभ्य इन्द्रादिभ्योऽपि पञ्चमीविभक्त इति पञ्चमी । प्रथिमानमाधिक्यमस्यै भैम्यै आख्यदाख्यातवान् । ख्यातेर्लुङि अस्यतिवक्ति-ख्यातिभ्योऽङिति च्लेरङादेशः । त्रैलोक्यातिशायि लावण्यमस्येति भैमीं प्रत्या-यितुमेव ब्रह्मा स्वयम्वरव्याजेन त्रिलोकीमेकत्राचकर्षेत्युत्प्रेक्षा ॥ २३ ॥

सभा नलश्रीयमकैर्यमाद्यैर्नलं विनाऽभूद्धृतदिव्यरत्नैः ।
भामाङ्गणप्राघुणिके चतुर्भिर्देवद्रुमैर्द्यौरिव पारिजाते ॥ २४ ॥

तत्रागमद्वासुकिरीशभूषाभस्मोपलेहस्फुटगौरदेहः ।
फणीन्द्रवृन्दप्रणिगद्यमानप्रसीदजीवाद्यनुजीविवादः ॥ २५ ॥

द्वीपान्तरेभ्यः पुटभेदनं तत् क्षणादवापे सुरभूमिपालैः ।
तत्कालमालम्भि न केन यूना स्मरेषुपक्षानिलतूललीला ॥ २६ ॥

---

**सभेति** ॥ सभा सा राजसभा नलश्रियो यमकैः पुनरुक्ताकारैस्तद्रूपधारिभिरित्यर्थः । धृतानि दिव्यानि रत्नानि यैस्तैः रत्नाभरणभूषितैरित्यर्थः । यमाद्यैर्नलं विना तदा नलस्यानागमनात्तेन विनाभूतैरित्यर्थः । अत एव चतुर्भिर्यमाद्यैर्देवैः पारिजाते पारिजाताख्ये देवद्रुमे भामायाः सत्यभामायाः अङ्गणस्य चत्वरस्य प्राघुणिके अतिथौ सति तया उपहृते सतीत्यर्थः । 'आदेशिकः प्राघुणिक आगन्तुरतिथिः स्मृतः' इति हलायुधः । धृतरत्नैश्चतुर्भिर्देवद्रुमैर्मन्दारादिभिः, 'पञ्चैते देवतरवो मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्' इत्यमरः । द्यौः स्वर्ग एवाभूत् अभादित्यर्थः ॥ २४ ॥

**तत्रेति** ॥ ईशभूषा ईश्वराभरणभूतः अत एव भस्मन उपलेहेनोपलेपेन तदङ्गरागभस्मसङ्क्रमणेन स्फुटगौरदेहः शुभ्राङ्गः वासुकिः फणीन्द्रवृन्दैः सर्पराजगणैः प्रणिगद्यमानो व्याह्रियमाणः, नेर्गदनदेत्यादिना णत्वम् । प्रसीदजीवौ प्रसीदजीवशब्दावादिर्यस्य सोऽनुजीविवादः सेवकजनोक्तिः यस्य स सन् आदिशब्दाज्जयादिशब्दसङ्ग्रहः तत्र स्वयंवरे आगमदागतः ॥ २५ ॥

**द्वीपान्तरेभ्य इति** ॥ तत् पुटभेदनं कुण्डिनपुरं द्वीपान्तरेभ्यः, अपादाने पञ्चमी । सुराश्च भूमिपालाश्च तैः क्षणादवापे अवाप्तम् । तथा हि तस्मिन्काले तत्कालमत्यन्तसंयोगे द्वितीया । केन यूना स्मरेषूणां पक्षानिलेन तूलस्य कार्पासादेर्लीला नालम्भि नालाभि । चिण्भावकर्मणोरिति लभेः कर्मणि लुङि चिण् । "विभाषा चिण्णमुलोः" इत्युपसृष्टाद्वैभाषिको नुमागमः । अत्रा-

रम्येषु हर्म्येषु निवेशनेन सपर्यया कुण्डिननाकनाथः ।
प्रियोक्तिदानादरनम्रताद्यैरुपाचरच्चारु स राजचक्रम् ॥ २७ ॥

चतुःसमुद्रीपरिखे नृपाणामन्तःपुरे वासितकीर्तिदारे ।
औदार्यदाक्षिण्यदयादमानां चतुष्टयीरक्षणसौविदल्ला ॥ २८ ॥

अभ्यागतैः कुण्डिनवासवस्य परोक्षवृत्तेष्वपि तेषु तेषु ।
जिज्ञासितस्वेप्सितलाभलिङ्गं स्वल्पोऽपि नावापि नृपैर्विशेषः ॥

---

खिलयूनां कामुकत्वेन कुण्डिनप्राप्तिसमर्थनात् कारणेन विना कार्यसमर्थनरूपोऽर्थान्तरन्यासः । स च तूललीलेति निदर्शनासङ्कीर्णः ॥ २६ ॥

**रम्येष्विति** ॥ सः कुण्डिननाकनाथः कुण्डिनेन्द्रो भीमः राजचक्रं राजमण्डलं रम्येषु हर्म्येषु निवेशनेन निवासनेन सपर्यया अर्घ्यपाद्यादिपूजया तथा प्रियोक्तिः प्रियवचनं दानं गन्धमाल्यताम्बूलादिसमर्पणं आदरो बहूकरणं नम्रता विनयाचरणमेवमाद्यैरुपचारैराद्यशब्दाद्भोजनादिसंविधानसङ्ग्रहः । चारु सम्यगुपाचरत् उपचरितवान् ॥ २७ ॥

युक्तं चैतदित्याह—**चतुरिति** ॥ चतुःसमुद्र्येव परिखा वलयं यस्य तस्मिन् वासिताः स्थापिताः कीर्तय एव दाराः कलत्राणि यस्मिन् तस्मिन् नृपाणां राज्ञामन्तःपुरे भूवलयरूप इति शेषः । औदार्यं त्यागः दाक्षिण्य परचित्तानुवर्तनं दया कृपा दम इन्द्रिययमनं तेषां चतुष्टय्येव रक्षणे सौविदल्ला कञ्चुकिनी । 'सौविदल्लाः कञ्चुकिनः' इत्यमरः । औदार्यादिगुणविहीनस्य कुतः कीर्तिरिति भावः । रूपकालङ्कारः ॥ २८ ॥

**अभ्यागतैरिति** ॥ अभ्यागतैर्नृपैः कुण्डिनवासवस्य कुण्डिनेन्द्रस्य भीमस्य सम्बन्धिषु परोक्षवृत्तेषु गूढनिष्पन्नेष्वपि तेषु तेषूपचारेषु जिज्ञासितो ज्ञातुमिष्टः प्रयत्नान्वेषणीयमित्यर्थः । जानातेः सनन्तात् कर्मणि क्तः । कुतः स्वेप्सितलाभस्य भैमीलाभस्य लिङ्गं गमकभूतः स्वल्पोऽपि विशेषो नावापि न लब्धः सर्वत्र समं व्यक्तञ्चोपचरणाद्गूढोपचारविशेषेणापि दुरूहस्तदभिप्राय इत्यर्थः ॥

अङ्के विदर्भेन्द्रपुरस्य शङ्के न सम्ममौ नैष तथा समाजः ।
यथा पयोराशिरगस्त्यहस्ते यथा जगद्वा जठरे मुरारेः ॥ ३० ॥
पुरे पथिद्वारगृहाणि तत्र चित्रीकृतान्युत्सववाञ्छयैव ।
नभोऽपि किर्मीरमकारि तेषां महीभुजामाभरणप्रभाभिः ॥ ३१ ॥
विलासवैदग्ध्यविभूषणश्रीस्तेषां तथाभूत् परिचारकेऽपि ।
अज्ञासिषुः स्त्रीशिशुबालिशास्तं यथागतं नायकमेव कञ्चित् ॥ ३२
अस्वेदगात्राश्चलचामरौघैरमीलनेत्राः प्रतिवस्तुचित्रैः ।
अम्लानमाला विपुलातपत्रैर्देवा नृदेवाश्च भिदां न भेजुः ॥ ३३ ॥

---

**अङ्क इति** ॥ विदर्भेन्द्रपुरस्य कुण्डिनपुरस्याङ्के अभ्यन्तरे एष समाजो राजसङ्घोऽगस्त्यहस्ते पयोराशिर्यथा मुरारेः जठरे जगद्वा यथा तथा न सम्ममौ न, किन्तु तथैव सम्ममावित्यर्थः । शङ्क इत्युत्प्रेक्षायाम् । मुनिहस्तहरिकुक्ष्यौपम्येन अल्पेऽपि पुरे समाजस्य महतः सम्मानोत्प्रेक्षणादुपमोत्प्रेक्षयोः सङ्करः । तेनाधाराधेययोरनानुरूप्यलक्षणाधिकालङ्कारस्तन्महत्वमत्यद्भुतं वस्तु च व्यज्यते॥

**पुर इति** ॥ तत्र पुरे उत्सववाञ्छया पन्थानो द्वाराणि गृहाणि च तान्येव चित्रीकृतानि तेषामभ्यागतानां महीभुजामाभरणप्रभाभिः नभोऽपि किर्मीरं चित्रमकारि । अपिशब्दात् पथिद्वारगृहाणि च किर्मीरितानीत्यर्थः । 'चित्रकिर्मीरकल्माषः शबलैताश्च कर्बुर' इत्यमरः । अत्र समृद्धिमद्वस्तुवर्णनादुदात्तालङ्कारः ॥ ३१ ॥

**विलासेति** ॥ तेषां राज्ञां परिचारके कर्मकरेऽपि विलासानां शृङ्गारचेष्टानां वैदग्ध्यस्य चातुर्यस्य विभूषणानां च श्रीः सम्पत्तिः तथाभूत् यथा स्त्रियः शिशवो बालिशाः अज्ञाश्च । 'शिशावज्ञे च बालिश' इत्यमरः । तं परिचारिकामागतं कञ्चिन्नायकं राजानमेव अज्ञासिषुरमंसत विवेकिनस्तु तत्वत एव जानन्तीति भावः । राजभृत्याश्च राजकल्पा इति राज्ञामैश्वर्योक्तिरतिशयोक्तिः ॥

अथ श्लोकद्वयेन राज्ञां देवानां च भेदो दुर्लभ इत्याह—**अस्वेदेत्यादि** ॥ चलचामराणामोघैरस्वेदानि गात्राणि येषां ते तथोक्ताः वस्तुनि वस्तुनि प्रतिवस्तु,

अन्योन्यभाषानवबोधभीतेः संस्कृत्रिमाभिर्व्यवहारवत्सु ।
दिग्भ्यः समेतेषु नरेषु वाग्भिः सौवर्गवर्गो न नरैरचिह्नि ॥ ३४॥

ते तत्र भैम्याश्चरितानि चित्रे चित्राणि पौरैः पुरि लेखितानि ।
निरीक्ष्य निन्युर्दिवसं निशाञ्च तत्स्वप्नसम्भोगकलाविलासैः ॥३५

---

वीप्सायामव्ययीभावः । चित्रैरद्भुतैः, 'विस्मयोऽद्भुतमाश्चर्यं चित्रमप्यथ भैरवम्' इत्यमरः । मीलनं मीलिका । गुरोश्च हल इति स्त्रियामप्रत्यये टाप् । तद्रहितान्यनिमिषाणि, यद्वा न मीलन्तीत्यमीलानि, पचाद्यच् । तानि नेत्राणि येषां ते तथोक्ता अनिमिषदृष्टय इत्यर्थः । तथा विपुलैरातपत्रैर्निमित्तैरम्लानमाला देवा इन्द्रादयः नृदेवा राजानश्च भिदां भेदं, षिद्भिदादिभ्योऽङ् । न भेजुः देवपक्षे सर्वत्र उपलक्षणे तृतीया ; राजपक्षे हेतौ तृतीया । तेषां स्वेदाद्यभावस्य स्वाभाविकत्वात् अत्र स्वेदगात्रादिपदार्थानां विशेषणगत्या देवनृदेवभेदाभावहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ३३ ॥

**अन्योन्येति** ॥ दिग्भ्यः समेतेषु समागतेषु नरेषु मनुष्येषु अन्योन्येषां भाषाणां अनवबोधेन निमित्तेन भीतेः सङ्कोचात् संस्कारेण निर्वृत्ताः संस्कृत्रिमाः, ड्वितः क्त्रिः, त्रेर्मम्नित्यमिति मप्, ताभिर्वाग्भिः व्यवहारोऽभिवदनव्यापारः तद्वत्सु देवभाषयैव भाषमाणेष्वित्यर्थः । सुष्ठु अर्ज्यत इति स्वर्गः, कर्मणि घञिति स्वामी । तत्रभवाः सौवर्गाः, भवार्थेऽण्प्रत्ययः । न य्वाभ्यामित्यादिना ऐजागमः । तेषां वर्गः नरैः कुण्डिनगामिभिस्तटस्थजनैः नाचिह्नि देवत्वेन नाज्ञायि । चिह्नवच्छब्दात् तत्करोतीति ण्यन्तात् कर्मणि लुङि णाविष्ठवद्भावात् "विन्मतोर्लुक्" इति मतुपो लुक् । भेदेऽप्यभेदलक्षणातिशयोक्तिः ॥ ३४ ॥

**त इति** ॥ ते सर्वे नृपास्तत्र तस्यां पुरि कुण्डिने पौरैः चित्रे आलेख्ये लेखितानि चित्राण्याश्चर्याणि, 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः । भैम्याश्चरितानि निरीक्ष्य दिवसं निन्युः । तस्याः सम्बन्धिभिः स्वप्ने याः सम्भोगकलाः सुरतचेष्टास्ता एव विलासा विनोदास्तैर्निशाञ्च निन्युः । एतेन जागरावस्थोक्ता ॥

सा विभ्रमं स्वप्नगतापि तस्यां निशि स्वलाभस्य ददे यदेभ्यः ।
तदर्थिनां भूमिभुजां वदान्या सती सती पूरयति स्म कामम् ॥

वैदर्भदूतानुनयोपहूतैः शृङ्गारभङ्गीष्वनुभाववत्सु ।
स्वयंवरस्थानजनाश्रयस्तैर्दिने परत्रालमकारि वीरैः ॥ ३७ ॥

भूषाभिरुच्चैरपि संस्कृतेयं वीक्ष्याकृतप्राकृतबुद्धिमेव ।
प्रसूनबाणे विबुधाधिनाथस्तेनाथ साशोभि सभा नलेन ॥ ३८ ॥

---

**सेति** ॥ सा भैमी तस्यां निशि स्वयंवरात्पूर्वरात्रौ स्वप्नगतापि अपि-स्सम्भावनायां जागरे तु सम्भावितत्वादिति भावः । एभ्यो राजभ्यः स्वलाभस्य स्वप्राप्तेर्विभ्रमं भ्रान्तिमलीकसङ्गतिमित्यर्थः । ददेऽददादिति यत्तत्स्मादात्म-दानाद्धेतोर्वदान्या दात्री सती पतिव्रता च सती भवन्ती । स्वप्राप्तिदानाद्वदान्या प्राप्तेर्मिथ्यात्वात्पतिव्रता च सतीत्यर्थः । अर्थिनां भूमिभुजां कामं मनोरथं पूरयति स्म । एवं स्वकामुकानेकलोकोत्तरयुवसमुदायेऽपि सा नलैकजीवितैव सती स्थितेत्यर्थः ॥ ३६ ॥

**वैदर्भेति** ॥ परत्र दिने परेऽहनि वैदर्भस्य भीमनृपतेर्दूतैरनुनयेन प्रार्थनेनोपहूतैः शृङ्गारभङ्गीषु रतिभावविजृम्भणेषु येऽनुभावाः कटाक्षविक्षेपादय-स्तद्वत्सु । शृङ्गारभङ्गीष्वनुभाववद्भिरिति पाठे शृङ्गारचेष्टाः प्रकाशयद्भिरित्यर्थः । तैर्दिगन्तागतैर्वीरैः स्वयंवरस्थानभूतो जनाश्रयो मण्डपः । 'मण्डपोऽस्त्री जना-श्रयः' इत्यमरः । अलमकारि अलङ्कृतम् । स्वयंवरस्थानं प्राप्तमित्यर्थः ॥ ३७ ॥

**भूषेति** ॥ विबुधाधिनाथः सुराधीश इन्द्रो य नलं वीक्ष्य भूषाभिर्भूषणै-रतिशयेन संस्कृतेऽलङ्कृतेऽपि, "सम्परिभ्यां करोतौ भूषणे" इति सुडागमः । प्रसूनबाणे मन्मथे प्राकृतबुद्धिं पृथग्जनबुद्धिमेव । 'प्राकृतस्तु पृथग्जनः' इत्यमरः । अकृत कृतवान्, न तु सुन्दरबुद्धिमित्यर्थः । कृञः कर्तरि लुङि तङ् । ह्रस्वादङ्गादिति सिचो लोपः । अथ राजागमनानन्तरं तेन नलेन सा सभा अशोभि । शोभां गमिता अलङ्कृतेत्यर्थः । शोभयतेः कर्मणि लुङ् ॥ ३८ ॥

धृताङ्गरागे कलितद्युशोभां तस्मिन् सभां चुम्बति राजचन्द्रे ।
गता बताक्ष्णोर्विषयं विलङ्घ्य क्व क्षत्रनक्षत्रकुलस्य लक्ष्मीः ॥ ३९

प्राग्दृष्टयः क्षोणिभुजाममुष्मिन्नाश्चर्यपर्युत्सुकिता निपेतुः ।
अनन्तरं दन्तुरितभ्रुवान्तु नितान्तमीर्ष्याकलुषा दृगंशाः ॥ ४० ॥

सुधांशुरेष प्रथमो भुवीति स्मरो द्वितीयः किमसावितीमम् ।
दस्रस्तृतीयोऽयमिति क्षितीशाः स्तुतिच्छलान्मत्सरिणो निनिन्दुः ॥

---

**धृतेति** ॥ धृतोऽङ्गरागोऽनुलेपनमेवाङ्गरागो विम्बरक्तता येन तस्मिन् प्रकृते राजचन्द्रे नले कलितद्युशोभां प्राप्ताकाशलक्ष्मीं सभां चुम्बति प्रविशति सति क्षत्राणि क्षत्रिया एव नक्षत्राणि तत्कुलस्य लक्ष्मीः कान्तिः अक्ष्णोर्विषयं विलङ्घ्य दृष्टिपथमतीत्य क्व गता । बतेत्याश्चर्ये । चन्द्रोदये नक्षत्रकुलमिव नलोदये सर्वं क्षत्रकुलं निष्प्रभं जातमित्यर्थः । द्युशोभेत्यत्र शोभेव शोभेति सादृश्याक्षेपात् निदर्शना तया सहाङ्गाङ्गिभावेन रूपकस्य सङ्करः ॥ ३९ ॥

**प्रागिति** ॥ प्राक् पूर्वममुष्मिन्नले क्षोणिभुजां राज्ञां दृष्टयः पूर्णदृष्टयः आश्चर्येण विस्मयपारवश्येन पर्युत्सुकिताः उत्कण्ठिताः सत्यो निपेतुरनन्तरं तु दन्तुरितभ्रुवां द्वेषाद्विषमितभ्रुवां तेषां दृगन्ताः कोणदृष्टयः ते च ते नितान्तमीर्ष्यया कलुषाः सन्तो निपेतुः अत्रौत्सुक्येर्ष्याप्रयुक्तानां पूर्णापूर्णदृष्टीनां द्वयीनां क्रमेणैकस्मिन्नले निपतनोक्तेर्द्वितीयः पर्यायभेदः । एकमनेकस्मिन् अनेकमेकस्मिन् वा क्रमेण पर्याय इति सूत्रणात्तथौत्सुक्येर्ष्यालक्षणविस्मयद्वेषसञ्चारिभावनिबन्धनाद्भावालङ्कारः प्रेयोऽपरपर्याय इति द्वयोः संसृष्टिः ॥ ४० ॥

**सुधांशुरिति** ॥ मत्सरिणः परशुभद्वेषिणः क्षितीशाः भुवीति सर्वशेषः भुवि भूतले एषः प्रथमः सुधांशुः मुख्यचन्द्रः किम् ? इति, असौ द्वितीयः स्मरः किम् ? इति, अयं तृतीयो दस्र आश्विनेयः किं ? इति च दस्रयोर्द्वित्वेऽप्येकत्वविवक्षया एकवचनं चन्द्रैकत्वेऽपि द्वित्वविवक्षायां द्वौ चन्द्राविविदविरुद्धम् । पुष्पवद्दारादि-

आद्यं विधोर्जन्म स एष भूमौ द्वैतं युवासौ रतिवल्लभस्य ।
नासत्ययोर्मूर्तिरियं तृतीया इति स्तुतस्तैः किल मत्सरैः सः ॥ ४२

इहेदृशः सन्ति कतीति दुष्टैर्दृष्टान्तिताऽलीकनलावली तैः ।
आत्मापकर्षे किल मत्सराणां द्विषः परस्पर्धनया समाधिः ॥४३॥

गुणेन केनापि जनेऽनवद्ये दोषान्तरोक्तिः खलु तत्खलत्वम् ।
रूपेण तत्संसददूषितस्य सुरैर्नरत्वं यददूषि तस्य ॥ ४४ ॥

---

शब्दवन्नियतवचनत्वाभावात् । इतीमं नलं स्तुतिछलान्निनिन्दुः । असमानसमीकरणेन स्तुतिर्लोकोत्तरस्य निन्दैवेति भावः । चन्द्रत्वाद्युत्प्रेक्षात्रयस्य संसृष्टिः ॥

**आद्यमिति** ॥ स एष नलो भूमौ भूतले विधोरिन्दोराद्यं जन्म प्रथमावतार इत्यर्थः । युवासौ रतिवल्लभस्य कामस्य द्वैतं द्वित्वं द्वितीयकाम इत्यर्थः । नासत्ययोरश्विनोस्तृतीया मूर्तिरित्यर्थः । इति इत्थं स नलो मत्सरैः मत्सरवद्भिः 'मत्सरोऽन्यशुभद्वेषस्तद्वत्कृपणयोरपि' इत्यमरः । अर्श आदिभ्योऽजिति मत्वर्थीयोऽकारः । कैश्चित् स्तुतः किल ? स्तुतः खलु ? पूर्वश्लोकेन पुनरुक्तमपि कविलोभात् स्थितं सर्वं पूर्ववत् ॥ ४२ ॥

**इहेति** ॥ दुष्टैः खलैस्तैर्नृपैः इह सभायामीदृशः कति कियन्तोऽपि सन्तीति कथयित्वेत्यर्थः । इतिनैवोक्तार्थत्वादप्रयोगः । अलीकनलावली इन्द्रवरुणयमानलात्मकमायानलपङ्क्तिः दृष्टान्तिता दृष्टान्तीकृता निदर्श्य साधारण्यापादनाददूषन्नित्यर्थः । तथा हि मत्सराणां मत्सरिणाम् आत्मनोऽपकर्षे दैन्ये सति द्विषः प्रतिपक्षस्य परेण पुरुषान्तरेण स्पर्धनया सङ्घर्षणया कोट्यन्तरसाधारण्यापादनेनेत्यर्थः । स्पर्धेर्ण्यन्ताद्युच् । समाधिः किल ? आत्मापकर्षपरिहारः खल्वित्यर्थः । एतादृशाः कति न सन्तीति समानकोट्यन्तरोद्घाटनेन दूषयित्वा तुष्यन्तीत्यर्थः । अर्थान्तरन्यासः ॥ ४३ ॥

**गुणेनेति** ॥ केनापि गुणेनानवद्ये अगर्ह्ये सर्वगुणसम्पन्न इत्यर्थः । अवद्यपण्येत्यादिना निपातनात्साधुः । जने दोषान्तरस्योक्तिः यस्य कस्यचित्

नलानसत्यानवदत्स सत्यः कृतोपवेशान् सविधे सुरेशान् ।
नोभाविलाभूः किमु दर्पकश्च भवन्ति नासत्ययुजौ भवन्तः ॥ ४५

अमी तमाहुः स्म यदत्र मध्ये कस्यापि नोत्पत्तिरभूदिलायाम् ।
अदर्पकाः स्म सविधे स्थितास्ते नासत्यतां नापि बिभर्ति कश्चित् ॥

---

तन्निष्ठानवद्यधर्मस्य दोषत्वेनोद्घाटनमित्यर्थः । तदेव तत्खलत्वं तस्य वक्तुर्दुष्टत्वं खलु ? कुतः यद्यस्माद्रूपेण सौन्दर्येण तस्यां संसदि तया संसदा वा अदूषितस्य प्रत्युत स्तुतस्यैवेति भावः । तस्य तलस्य सम्बन्धि नरत्वं मनुष्यत्व सुरैरिन्द्रादिभिरदूषि दोषत्वेनोद्घाटितमतोऽन्यद्वक्तुमशक्ता इत्यर्थः । दूषयतेः कर्मणि लुङ् । सामान्येनोक्तस्य खलत्वस्य नरत्वदूषणेन समर्थनाद्विशेषेण-सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४४ ॥

**नलानिति** ॥ सत्यः स नलो यथार्थनलः असत्यान्नलानलीकभूतान् सविधे समीपे कृतोपवेशानुपविष्टान् सुरेशानिन्द्रादीनवदत् । किमिति हे धन्याः ! भवन्तः असत्यौ सत्यरहितौ न भवत इति नासत्यावश्विनौ, 'नासत्यावश्विनौ दस्रौ' इत्यमरः । "नभ्राण्नपात्" इत्यादिना निपातनान्नञो नलोपाभावः । ताभ्यां युज्येते इति तद्युजौ तद्युक्तौ, सत्सूद्विषेत्यादिना क्विप् । उभाविलाया-मिलादेव्यां भवतीतीलाभूरैलः पुरूरवाः । क्विप् । दर्पकः कामश्च न भवन्ति किमिति प्रश्नः । शेषे प्रथम इति प्रथमपुरुषः । चत्वारो यूयमश्विनौ पुरूरवाः कामश्च न भवथ किमित्यपृच्छदित्यर्थः । तेषु निजरूपदर्शनादन्येषामिव स्वस्यापि विस्मयावेशाच्च इत्थमप्राक्षीदिति भावः ॥ ४५ ॥

**अमी इति** ॥ अथामी देवास्तं नलमाहुः स्म ऊचुः । "लट् स्मे" इति भूते लट् । उत्तरश्लोके तेभ्यः परान्नः परिकल्पयस्वेति वक्ष्यते । तत्र हेतुमाह—यदिति । यद्यस्मात्कारणात् ये वयं ते तव सविधे समीपे स्थिताः । अत्रैतेषु चतुर्षु मध्ये कस्यापि इलायां बुधकलत्रे इलादेव्यां भूमौ चोत्पत्तिर्नाभूत् । अत्र न कोऽप्यैलः पुरूरवा इत्यर्थः । अत्र न कोऽपि भौमः । किन्तु दिव्य इत्यर्थान्तरम् । 'इलाकलत्रे सौम्यस्य धरित्र्यां गवि वाचिते' इति विश्वः । दर्पयतीति

तेभ्यः परान्नः परिकल्पयस्व श्रिया विदूरीकृतकामदेवान् ।
अस्मिन् समाजे वहुषु भ्रमन्ती भैमी किलास्मासु घटिष्यतेऽसौ ॥

असाम यन्नाम तवेह रूपं स्वेनाधिगत्य श्रितमुग्धभावाः ।
तन्नो धिगाशापतितान्नरेन्द्र ! धिक् चेदमस्मद्विबुधत्वमस्तु ॥ ४८॥

---

दर्पकः कन्दर्पः । 'कन्दर्पो दर्पकोऽनङ्गः' इत्यमरः । दृप्यतेर्ण्यन्तादण्प्रत्ययः । ततोऽन्ये अदर्पकाः स्मः । तदन्यार्थे नञ्समासः । न कोऽप्यत्र काम इत्यर्थः । दृप्यन्तीति दर्पका दृप्ताः, अण्यन्तात् ण्वुल्प्रत्ययः । ततोऽन्ये—अदर्पका दर्पशून्या इत्यर्थान्तरं पूर्ववत्समासः । किञ्च कश्चिन्नासत्यताम् अश्वितां न विभर्ति न कोऽप्यत्र नासत्य इत्यर्थः । 'नासत्यावश्विनौ दस्रौ' इत्यमरः । नासत्यतां सत्यतां च न विवर्ति । किन्त्वसत्यनला वयमित्यर्थान्तरम् ॥ ४६ ॥

**तेभ्य इति** ॥ पूर्वश्लोकस्थस्य यच्छब्दस्यापेक्षया तदो व्यवहारः । तत् तस्मादिलाभवनाद्यभावात् श्रिया सौन्दर्येण विदूरीकृतकामदेवान् अधरीकृतमन्मथान्नोऽस्मान् तेभ्य ऐलादिभ्यः परानन्यान् परिकल्पयस्व निश्चिनुष्व । अन्यच्च हे सौम्य ! श्रिया विदूरीकृतकामदेवान्नोऽस्मांस्तेभ्यः परानुत्कृष्टान् देवान् विद्धि । अस्तु किमर्थमागतास्तत्राहुः असौ भैमी अस्मिन् समाजे राजसङ्घे वहुषु मध्ये भ्रमन्ती पर्यटन्ती अस्मासु घटिष्यते सेत्स्यतीति तथा वहुष्वस्मासु नलरूपेष्विति भावः । अत एव भ्रमन्ती को वा नल इति भ्राम्यन्ती अस्मासु घटिष्यते सङ्गंस्यते । किलेति सम्भावनायाम् । इत्याशयेनेति शेषः । अत्रार्थद्वयस्यापि विवक्षितत्वात् केवलप्रकृतश्लेषः ॥ ४७ ॥

**असामेति** ॥ हे नरेन्द्र ! यद्यस्मात्तव नाम रूपञ्च स्वेनात्मनाधिगत्य ज्ञात्वापि श्रितमुग्धभावाः स्वीकृतमूढभावाः सन्तः इह स्वयंवरे असाम भवाम वसामेति यावत् । अस्तेर्लोट् । तत्तस्मादाशापतितान् स्त्रीतृष्णामग्नान्नोऽस्मान् धिक् । इदमस्माकं विबुधत्वं विपश्चित्वञ्च धिगस्तु । अन्यच्च यत्तव रूपमधिगत्य त्वद्वेषं धारयित्वा श्रितमुग्धभावा लब्धसौन्दर्याः सन्तः । 'मुग्धः सुन्दरमूढयोः'

सा वागवाज्ञायितमां नलेन तेषामनाशङ्कितवाक्छलेन ।
स्त्रीरत्नलाभोचितयत्नमग्नमेनं न हि स्म प्रतिभाति किञ्चित् ॥ ४९.

यः स्पर्द्धया येन निजप्रतिष्ठां लिप्सुः स एवाह तदुन्नतत्वम् ।
कः स्पर्धितुः स्वाभिहितस्वहानेः स्थानेऽवहेलां बहुलां न कुर्यात् ॥

---

इति विश्वः । असाम नाम दीप्यामहे खलु । असगतिदीप्त्यादानेष्विति धातोः-र्लोट् । तत्तस्मान्नोऽस्माकम् आशापतितां दिक्पतितां धिक् । 'आशातृष्णा-दिशोरपि' इति विश्वः । इदमस्मद्विबुधत्वञ्च धिक् । तुच्छव्यापारादिति भावः । 'विबुधः पण्डिते देवे' इति विश्वः । पूर्व एवालङ्कारः ॥ ४८ ॥

**सेति** ॥ अनाशङ्कितवाक्छलेन अनाकलितवाक्पटेन नलेन तेषां देवानां सा वाक् पूर्वोक्ता व्याजोक्तिः अवाज्ञायितमामतिशयेनावज्ञाता पुरःस्फूर्तिक एवार्थो गृहीतो न तु तात्त्विक इत्यर्थः । जानातेरवपूर्वात्कर्मणि लुङि तङि तिङव्ययघादाम्प्रत्ययः । कुतः हि यस्मात् स्त्रीरत्नलाभे य उचितयत्नो योग्य-व्यापारो देवतानुध्यानादिः तत्र मग्नमासक्तमेनं नलं प्रति किञ्चित्किमप्यन्यन्न प्रतिभाति स्म न स्फुरति स्म । व्यासङ्गो हि महान्विवेकप्रतिबन्धक इति भावः॥

नन्वसमानस्य वृथामत्सरिणः परस्योपेक्षणे कथं स्वपरतारतम्याभि-व्यक्तिरित्याकाङ्क्षायामाह—**य इति** ॥ योऽपकृष्टो येनोत्कृष्टेन सह स्पर्धया सङ्घर्षणेन निजप्रतिष्ठामुत्कर्षं लिप्सुः लब्धुमिच्छुः, लभेः सन्नन्तादुप्रत्ययः । सः स्पर्धमान एव तस्योत्कृष्टपुरुषस्य उन्नतत्वमुत्कृष्टत्वमाह—ब्रवीति तच्चेष्टयैव तयोस्तारतम्यं स्फुटीभवतीत्यर्थः । तथा हि कः प्रेक्षावान् स्वेनैवाभिहिता स्वहानिः स्वापकर्षो यस्य तस्य स्पर्धितुर्बहुलां भूयसीमवहेलामवज्ञां न कुर्यात् कुर्यादेवेत्यर्थः । व्रीडात्रमाननावज्ञावहेलनमसूर्क्षणमित्यत्रावहेलति क्षीर-स्वामी । स्थाने युक्तम् । 'युक्ते द्वे सांप्रतं स्थानम्' इत्यमरः । इन्द्रादिदुश्चेष्टया नलस्य महानुत्कष एव आसीदिति भावः ॥ ५० ॥

गीर्देवतागीतयशःप्रशस्तिः श्रिया तटित्वल्ललिताभिनेता ।
मुदा तदावैक्षत केशवस्तं स्वयंवराडम्बरमम्बरस्थः ॥ ५१ ॥
अष्टौ तदाष्टासु हरित्सु दृष्टीः सदोदिदृक्षुर्निदिदेश देवः ।
लैङ्गीमदृष्ट्वापि शिरः श्रियं यो दृष्टौ मृषावादितकेतकीकः ॥ ५२॥
एकेन पर्यक्षिपदात्मनाद्रिं चक्षुर्मुरारेरभवत् परेण ।
तैर्द्वादशात्मा दशभिस्तु शेषैर्दिशोदशालोकत लोकपूर्णाः ॥ ५३ ॥

---

**गीरिति** ॥ तदा तस्मिन् काले केशवो विष्णुः गीर्देवतया वाग्देवतया गीता यशःप्रशस्तिः कीर्तिप्रबन्धो यस्य सः श्रिया लक्ष्मीदेव्या तडित्वतः सविद्युतो मेघस्य ललितस्य विलासस्य अभिनेतानुकर्ता सन् अम्बरस्थः तं स्वयंवरस्याडम्बरं संरम्भं मुदा हर्षेणैक्षत किमुतान्य इति भावः ॥ ५१ ॥

**अष्टाविति** ॥ तदा तस्मिन्काले सदः स्वयंवरसभां दिदृक्षुः द्रष्टुमिच्छुः गत इति शेषः । देवश्चतुर्मुखोऽष्टासु हरित्सु दिक्षु अष्टौ दृष्टीर्निदिदेश प्रेरयामास अष्टदिगागतजनतावलोकनार्थमित्यर्थः । यो देवो लैङ्गीं ज्योतिर्लिङ्गसम्बन्धिनीं शिरःश्रियं लिङ्गस्योत्तरावधिमित्यर्थः । अदृष्ट्वापि दृष्टौ लिङ्गशिरोदर्शनविषये मृषा वदतीति मृषावादिनी सा कृता मृषावादिता मृषावादीकृतेत्यर्थः । मृषावादि-शब्दात्तत्करोतीति ण्यन्तात् कर्मणि क्तः । पुंवद्भावटिलोपाद्यर्थं णाविष्ठवद्भावोप-सङ्ख्यानाट्टिलोपः । तथा कृता केतकी येन स कूटसाक्षीकृतकेतकीकुसुम इत्यर्थः । "नद्यृतश्च" इति कप्समासान्तः । पुरा किल ब्रह्मा ज्योतिर्लिङ्गस्य शिरोदेश-मदृष्ट्वाप्यद्राक्षमित्युक्त्वा तत्र शिवशिरःपतितं केतकीकुसुमं कूटसाक्षीचकारेति पौराणिकी कथात्रानुसन्धेया । तथा च शिवशिरःपारमिव स्वयंवरागतजनता-सागरपारमपि अष्टाभिर्दृष्टिभिः पश्यन्नपि नापश्यदित्यर्थः ॥ ५२ ॥

**एकेनेति** ॥ द्वादशात्मानो रूपाणि यस्य स द्वादशात्मा सूर्य एकेन आत्मना रूपेणाद्रिं मेरुं पर्यक्षिपत् प्रदक्षिणीकृतवान् परेणात्मना मुरारेर्विष्णो-श्चक्षुर्दक्षिणमभवत् शेषैरवशिष्टैर्दशभिस्तैरात्मभिस्तु लोकपूर्णाः जनसम्पूर्णाः दश दिशो आलोकत आलोकितवान् ॥ ५३ ॥

प्रदक्षिणं दैवतहर्म्यमद्रिं पदैश्च कुर्वन्नपि शर्वरीशः ।
द्रष्टा महेन्द्रानुजदृष्टिमूर्त्या न प्राप तद्दर्शनविघ्नतापम् ॥ ५४ ॥

विलोकमाना वरलोकलक्ष्मीं तात्कालिकीमप्सरसो रसोत्काः ।
जनाम्बुधौ तत्र निजाननानि वितेनुरम्भोरुहकाननानि ॥ ५५ ॥

न यक्षलक्षैः किमलक्षि नो सा सिद्धैः किमध्यासि सभाप्तशोभा ।
सा किन्नरैः किं न रसादसेवि नादर्शि हर्षेण महर्षिभिश्च ॥ ५६ ॥

---

**प्रदक्षिणमिति** ॥ शर्वरीशश्चन्द्रोदेवतानां हर्म्यं वासगृहम्, अद्रिं मेरुं पदैः प्रदक्षिणं कुर्वन्नपि महेन्द्रानुजस्योपेन्द्रस्य विष्णोर्दृष्टिमूर्त्या नेत्ररूपेण द्रष्टा सन् तस्य स्वयवरस्य दर्शनविघ्नेन यस्तापस्तं न प्राप । चन्द्रस्य स्वयमनागतत्वेऽपि तत्र विष्णोरागतत्वात्तद्वामाक्षिरूपेणाद्राक्षीदेवेति कुतस्तस्य दर्शनक्लेश इत्यर्थः ॥ ५४ ॥

**विलोकमाना इति** ॥ रसेन रागेणोत्का उन्मनसः उत्सुकाः सत्यः, उत्क उन्मना इति निपातनमभिधानं च । तात्कालिकीं तत्कालभवां वरलोकलक्ष्मीं परिणेतृजनशोभां विलोकमाना आलोकमाना अप्सरसस्तत्र जनाम्बुधौ स्वःस्थालोकिकजनार्णवे भूमिष्ठैरयोगात् । निजाननानि स्वमुखानि अम्भोरुहकाननानि वितेनुः दधुः तदन्तर्गतानि तन्मुखानि पद्मानीव रेजुरित्यर्थः ॥ ५५ ॥

**नेति** ॥ तदा आप्तशोभा लब्धकान्तिः सा सभा यक्षाणां लक्षैः शतसहस्रैर्नालक्षि नादर्शि किम्? सिद्धैर्वा नाध्यासि नाध्यासिता किम्? किन्नरैः रसाद्रागान्नासेवि न सेविता किम्? महर्षिभिः हर्षेण नादर्शि च न दृष्टा किम्? सेवाध्यासने अपि मुख्यासम्भवात्सदृशन्यायेन दर्शने पर्यवसिते । तथा च सर्वैरदर्शीत्यर्थः । सर्वत्र कर्मणि लुङ् ॥ ५६ ॥

वाल्मीकिरश्लाघत तामनेकशाखत्रयीभूरुहराजिभाजा ।
क्लेशं विना कण्ठपथेन यस्य दैवी दिवः प्राग्भुवमागमद्वाक् ॥५७॥

प्राशंसि संसद् गुरुणापि चार्वी चार्वाकतासर्वविदूषकेण ।
आस्थानपट्टं रसनां यदीयां जानामि वाचामधिदेवतायाः ॥ ५८ ॥

नाकेऽपि दीव्यत्तमदिव्यवाचि वचःस्रगाचार्यकवित्कविर्यः ।
दैतेयनीतेः पथि सार्थवाहः काव्यः स काव्येन सभामभाणीत् ॥

---

**वाल्मीकिरिति** ॥ तां सभां वाल्मीकिर्मुनिरश्लाघत अस्तुत प्राक् प्रथममनेकाः शाखाः काठककालापादिवेदविभागाः वृक्षावयवविशेषाश्च यस्याः सा अनेकशाखा, 'शाखा वेदप्रभेदेषु बाहौ पार्श्वद्रुमाङ्गयोः' इति वैजयन्ती । सा च सा त्रयी त्रिवेदी च सैव भूरुहराजिस्तरुपङ्क्तिः तां भजतीति तद्भाक्, भजो ण्विः। तेन, तद्भाजा पथिकविश्रामवृक्षवतेत्यर्थः यस्य कण्ठ एव पन्थास्तेन कण्ठपथेन वाग्देवी छन्दोमयी सरस्वती क्लेशं विना अनायासेन दिवो द्युलोकात् भुवं भूलोकमागमदागता । येन छन्दोबद्धा सरस्वती प्रथममनायासेन भूलोकमवतारिता तेनादिकविनापि स्तुतेत्यर्थः ॥ ५७ ॥

**प्राशंसीति** ॥ चार्वी चारुः रम्या । वोतो गुणवचनादिति वैकल्पिकी ङीप् । संसत्सभा चार्वाकतया चार्वाकसिद्धान्तितया हेतुना सर्वविदूषकेण गुरुणा बृहस्पतिनापि प्राशंसि प्रशंसिता किमुतान्यैरिति भावः । यदीयां रसनां जिह्वां वाचामधिदेवतायाः सरस्वत्या आस्थानपट्टमास्थानपीठं सिंहासनं जानामि । 'शासनान्तरपीठयोः पट्टम्' इति विश्वः । सर्वविदूषकेण वाचस्पतिनापि स्तूयत इति सभाशोभायाः परमोत्कर्ष इति भावः ॥ ५८ ॥

**नाकेऽपीति** ॥ यः काव्यः अतिशयेन दीव्यन्त्यो दीव्यत्तमाः देदीप्यमानाः, तसिलादिष्वा कृत्वसुच इति पुंवद्भावः । ता दिव्यवाचः संस्कृतवाचो यस्मिन्नाके स्वर्गेऽपि वचःस्रजां वाग्गुम्फनानाम् आचार्यकमाचार्यत्वं, योपधाद्गुरूपोत्तमाद्वुञ् । तद्वित्कवितामार्गोपदेष्टा कविः स्वयं कवयिता च, दित्या

अमेलयद्भीमनृपः परं न नाकर्षदेतान् दमनस्वसैव ।
इदं विधातापि विचित्य यूनः स्वशिल्पसर्वस्वमदर्शयन्नः ॥ ६० ॥

एकाकिभावेन पुरा पुरारिर्यः पञ्चतां पञ्चशरं निनाय ।
तद्भीसमाधानममुष्य कायनिकायलीलाः किममी युवानः ॥ ६१ ॥

---

अपत्यानि पुमांसो दैतेया दैत्याः, दितिशब्दात् कृदिकारङीषन्तात् स्त्रीभ्यो ढक् । अन्यथा दित्यदित्येत्यादिना ण्यप्रत्ययस्य पूर्वविप्रतिषेधेन ढगपवादकत्वात् । लिङ्गविशिष्टपरिभाषात्वनित्येति गतिः । भाष्यवार्तिकयोरनुरक्तत्वादसाधुरिति केचित् । परेत्वभियुक्तप्रयोगादभिधानिकप्रसिद्धेश्च तन्नाद्रियन्ते । तेषां नीतेः पथि दैत्यनीतिमार्गे सार्थं वहतीति सार्थवाहोऽग्रणीः । कर्मण्यण् । स काव्यः कवेरपत्यं शुक्रः, कुर्वादिभ्यो ण्यः । तां सभां काव्येन प्रबन्धेनाभाणीदवर्णयत् । 'काव्यं ग्रन्थे ग्रहे काव्य' इति विश्वः ॥ ५९ ॥

अथ षड्भिस्तत्काव्यमेवाह—**अमेलयदित्यादि** ॥ एतान् यूनो युवजनान् भीमनृप एव नामेलयत् न मेलितवान् । तथा दमनस्वसा दमयन्त्येव नाकर्षत्स्वगुणेनेति शेषः । किन्तु विधातापि विचित्य एकत्र सङ्गृह्येदं पुरोवर्ति युवरूपस्वशिल्पसर्वस्वं स्वनिर्माणकौशलसम्पदं नोऽस्माकमदर्शयत् राज्ञः प्रयत्नात् भैमीसौन्दर्यसम्पदा ब्रह्मणः स्वनिर्माणकौशलप्रकाशनव्यसनाच्चेदं युवमेलनं नत्वेकैकस्मादित्युत्प्रेक्षा ॥ ६० ॥

**एकाकीति** ॥ यः पुरारिः पुरा एकाकिभावेनासहायत्वेन हेतुना पञ्चशरं स्मरं पञ्चानां भावः पञ्चता पाञ्चभौतिकस्य शरीरस्य पञ्चधा विशरणं मरणमिति यावत् तां निनाय, अमी युवानः अमुष्य कामस्य सम्बन्धिन्यास्तस्मात् पुरारेर्भियः समाधानं निवारणं निवारका इत्यर्थः । कार्यकारणयोरभेदोपचारः । कायनिकायलीला शरीरसमूहविलासास्तद्भेदाः किमिति यावत् । एकाकिनं कामं हरः संहरिष्यतीति भयादनेकधा परिणताः कामकायव्यूहा इमे इत्युत्प्रेक्षा । सर्वे कामकल्पा इत्यर्थः ॥ ६१ ॥

पूर्णेन्दुबिम्बानुमासभिन्नानस्थापयत् क्वापि निधाय वेधाः ।
तैरेव शिल्पी निरमादमीषां मुखानि लावण्यमयानि मन्ये ॥६२॥

मुधार्पितं मूर्धसु रत्नमेतैर्यन्नाम तानि स्वयमेत एव ।
स्वतः प्रकाशे परमात्मबोधे बोधान्तरं न स्फुरणार्थमर्थ्यम् ॥६३॥

प्रवेक्ष्यतः सुन्दरवृन्दमुच्चैरिदं मुदा चेदितरेतरं तत् ।
न शक्ष्यतो लक्षयितुं विमिश्रं दस्रौ सहस्रैरपि वत्सराणाम् ॥६४॥

---

**पूर्णेति** ॥ शिल्पी निर्माणकुशलो वेधाः अनुमासं मासि मासि भिन्नान् नानाभूतान् पूर्णेन्दुबिम्बान् संसारस्यानादित्वादसङ्ख्यानिति भावः । क्वापि निधाय निक्षिप्यास्थापयत् स्थापितवान् चिरमरक्षदित्यर्थः । अथ तैः पूर्णेन्दु-बिम्बैरेवामीषां यूनां लावण्यमयानि मुखानि निरमात् निर्मितवानिति मन्ये । उत्प्रेक्षा ॥ ६२ ॥

**मुधेति** ॥ एभिर्नृपैर्मूर्धसु मौलिषु रत्नं मुधार्पितं शिरोमणिर्वृथा धृतः इत्यर्थः । कुतः यद्यस्मादेते स्वयमेव तानि रत्नानि नाम खलु तथोत्कृष्टा इत्यर्थः । 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः । किं रत्नधारणेनेति वाच्यप्रतीयमानयोरभेदा-ध्यवसायेन वैयर्थ्योक्तिः । तथा हि स्वतः प्रकाशे स्वयंप्रकाशे परमात्मैव बोध-स्तस्मिन् स्वरूपचैतन्ये विषये स्फुरणार्थं प्रकाशनार्थं बोधान्तरं नार्थ्यं नापेक्ष्यम् । दृष्टान्तालङ्कारः ॥ ६३ ॥

**प्रवेक्ष्यत इति** ॥ दस्रावश्विनावुच्चैर्महदिदं सुन्दरवृन्दं रमणीयवर्गं मुदा कौतुकेन प्रवेक्ष्यतोऽन्तः प्रविष्टौ भविष्यतश्चेत् तत्तर्हि विमिश्रं मिलितमेकाकार-तयानभिव्यक्तम् । इतरेतरमन्योन्यं वत्सराणां सहस्रैरपि लक्षयितुं प्रविविक्ततया ग्रहीतुं न शक्ष्यतः शक्तौ न भविष्यतः । अत्र दस्रयोः सौन्दर्यगुणसाम्येन सुन्दरवृन्दैकतापत्त्या सामान्यालङ्कारः । "सामान्यं गुणसाम्येन यत्र वस्त्वन्तरै-कता" इति लक्षणात् ॥ ६४ ॥

स्थितैरियद्भिर्युवभिर्विदग्धैर्दग्धेऽपि कामे जगतः क्षतिः का ।
एकाम्बुविन्दुव्ययमम्बुराशेः पूर्णस्य कः शंसति शोषदोषम् ॥ ६५

इति स्तुवन् हुङ्कृतिवर्गणाभिर्गन्धर्ववर्गेण स गायतैव ।
ओङ्कारभूम्ना पठतैव वेदान् महर्षिवृन्देन तथान्वमानि ॥ ६६ ॥

न्यवीविशत्तानथ राजसिंहान् सिंहासनौघेषु विदर्भराजः ।
शृङ्गेषु यत्र त्रिदशैरिवैभिरशोभि कार्तस्वरभूधरस्य ॥ ६७ ॥

विचिन्त्य नानाभुवनागतांस्तानमर्त्यसङ्कीर्त्यचरित्रगोत्रान् ।
कथ्याः कथङ्कारममी सुतायामिति व्यषादि क्षितिपेन तेन ॥६८॥

---

**स्थितैरिति** ॥ विदग्धैः प्रगल्भैरदग्धैश्च स्थितैरियद्भिरेतावद्भिर्युवभिः परिपूर्णस्येति शेषः । जगतः कामे दग्धेऽपि का क्षतिः न्यूनता न कापीत्यर्थः । तथा हि पूर्णस्याम्बुराशेरेकाम्बुविन्दुव्ययं कः शोष एव दोषस्तं शंसति न कोऽपि दोषत्वेन शंसतीत्यर्थः । दृष्टान्तालङ्कारः ॥ ६५ ॥

**इतीति** ॥ इतीत्थं स्तुवन् स काव्यो गायतैव गन्धर्ववर्गेण हुङ्कृतीनां वर्गणाः पुनःपुनरुच्चारणानीत्यर्थः । ताभिरन्वमानि अनुमतः कर्मणि लुङ् । तथा वेदान् पठतैव महर्षिवृन्देन ऊँकारभूम्ना प्रणवभूयस्त्वेनान्वमानि अत्र गानार्थैः हुङ्कारैः वेदपाठार्थैः ऊँकारैश्च काव्यवाक्यानुमतिः कृतैवेत्युत्प्रेक्षा । 'ऊँमित्यनुमतौ प्रोक्तं प्रणवे चाप्युपक्रमे' इति विश्वः ॥ ६६ ॥

**न्यवीविशदिति** ॥ अथ विदर्भराजो भीमस्तान् राज्ञः सिंहानिव राजसिंहान् राजश्रेष्ठान् सिंहासनौघेषु न्यवीविशत् उपवेशयामास । विशेर्णौ च लुङि चङ् । यत्र येषु सिंहासनेष्वेभी राजसिंहैः कार्तस्वरभूधरस्य हेमाद्रेः शृङ्गेषु त्रिदशैरिवाशोभि शोभितम् । भावे लुङ् ॥ ६७ ॥

**विचिन्त्येति** ॥ तेन क्षितिपेन भीमेन नानाभुवनेभ्य आगतांस्तान् यूनो मर्त्यैः सङ्कीर्त्यानि कीर्तयितुं शक्यानि चरित्राणि गोत्राणि कुलानि नामानि

श्रद्धालुसङ्कल्पितकल्पनायां कल्पद्रुमस्याथ रथाङ्गपाणेः ।
तदाकुलोऽसौ कुलदैवतस्य स्मृतिं ततान क्षणमेकतानः ॥ ६९ ॥

तच्चिन्तनानन्तरमेव देवः सरस्वतीं सस्मितमाह स स्म ।
स्वयंवरे राजकगोत्रवृत्तवक्त्रीमिह त्वां करवाणि वाणि ! ॥ ७० ॥

कुलञ्च शीलञ्च बलञ्च राज्ञां जानासि नानाभुवनागतानाम् ।
एषामतस्त्वं भव वावदूका मूकायितुं कः समयस्तवायम् ॥ ७१ ॥

---

च येषां ते न भवन्तीति तथोक्तास्तांस्तथाविधान्विचिन्त्यामी युवानः सुतायां विषये कथङ्कारं कथम् ? अन्यथैवं कथमित्यादिना णमुल् । कथ्याः कथनीयाः, अचो यत्, इति हेतोर्व्यषादि विषण्णेन अभावि । भावे लुङ् । प्राक्सिताड्व्यवायेऽपि सदिरप्रतेरिति षत्वम् ॥ ६८ ॥

**श्रद्धालिविति** ॥ अथ विषादानन्तरमाकुलोऽसौ भीमः तथा श्रद्धालूनां स्पृहिगृहीत्यादिना आलुच् प्रत्ययः । सङ्कल्पितकल्पनायामीप्सितार्थसम्पादने कल्पद्रुमस्य कुलदैवतस्य रथाङ्गपाणेः कृष्णस्य स्मृतिं क्षणमेकतानोऽनन्यवृत्तिः सन् ततान । 'एकतानोऽनन्यवृत्तिः' इत्यमरः ॥ ६९ ॥

**तदिति** ॥ तस्य भीमस्य चिन्तनानन्तरं स्मरणानन्तरमेव स देवो हरिः । सरस्वतीं सस्मितमाह स्म अभ्यभाषे । लट् स्म इति भूते लट् । किमिति हे वाणि ! अहं त्वां स्वयम्वरे राज्ञां समूहो राजकं, गोत्रोक्षेत्यादिना वुञ् । तस्य गोत्राणां नाम्नां कुलानां वृत्तानां चरित्राणाञ्च वक्त्रीमाख्यात्रीं करवाणि । प्रैषार्थे लोट् ॥ ७० ॥

**कुलमिति** ॥ हे वाणि ! नानाभुवनागतानां राज्ञां कुलञ्च शीलञ्च बलञ्च जानासि । अतः कारणात् त्वमेषां वावदूका वक्त्री वंशवीर्यादिगुणतो वर्णयित्री भव । 'वावदूकस्तु वक्तरि' इत्यमरः । यजजपेत्यत्र वदेश्चेति वार्तिकेन वदेर्यङ्लुगन्तादूकः इति स्वामी । तथा हि तव मूकायितुं मूकवदाचरितुं तूष्णीं स्थातुं

जगत्त्रयीपण्डितमण्डितैषा सभा न भूता न च भाविनी वा ।
राज्ञां गुणज्ञापनकैतवेन सङ्ख्यावतः श्रावय वाङ्मुखानि ॥ ७२ ॥

इतीरिता तच्चरणात् परागं गीर्वाणचूडामणिमृष्टशेषम् ।
तस्य प्रसादेन सहाज्ञया सा वादाय मूर्ध्नादरिणी बभार ॥७३॥

मध्येसभं सावततार बाला गन्धर्वविद्यामयकण्ठनाला ।
त्रयीमयीभूतवलीविभङ्गा साहित्यनिर्वर्तितदृक्तरङ्गा ॥ ७४ ॥

---

मूकशब्दादाचारार्थे क्यङन्तात् कालसमयवेलासु तुमुन् । अयं कः समयः को वावसरः वाग्मिनाम् अवसरे तूष्णींभावो न युक्त इत्यर्थान्तरन्यासः ॥ ७१ ॥

वागवसरत्वमेवाह—**जगदिति** ॥ जगत्त्रय्यां ये पण्डिताः वाचस्पत्यादयः तैरशेषैर्मण्डितैषा सभा न भूता न च भाविनी वा न प्रवृत्ता न च भविष्यतीत्यर्थः । अतो राज्ञां गुणज्ञापनकैतवेन गुणप्रकाशनच्छलेन सङ्ख्यावतः पण्डितान् वाङ्मुखान्युपन्यासान्, 'सङ्ख्यावान् पण्डितः कविरिति उपन्यासस्तु वाङ्मुखम्' इति चामरः । श्रावय । पण्डितमण्डली हि विदुषां विजृम्भणस्थानं, तत्रापि तूष्णींभावे वाग्वैफल्यमयोग्यता च स्यादिति भावः ॥ ७२ ॥

**इतीति** ॥ इतीरिता आज्ञप्तासौ वाणी तस्य हरेश्चरणाद्गीर्वाणानां देवानां चूडामणिभिः किरीटैः मृष्टस्य शेषं परागं तस्य हरेः आज्ञयैव प्रसादेन अनुग्रहेण सहादाय मूर्ध्ना आदरिणी आदरवती सती बभार ॥ ७३ ॥

**मध्येसभमिति** ॥ सा वाणी मध्ये सभाया मध्येसभं, "पारे मध्ये षष्ठ्या वा" इत्यव्ययीभावः, अवततार । कीदृशी बाला युवतिर्गन्धर्वविद्या गानविद्या तन्मयस्तद्विकारः कण्ठनाली यस्याः सा त्रयीमयीभूतास्त्रिवेदविकारीभूता वलीविभङ्गा त्रिवलीपर्वाणि यस्याः सा साहित्येन कवित्वेन निर्वर्तिता निष्पादिता दृशो दृष्टयः तरङ्गा इव यस्याः सा ॥ ७४ ॥

आसीदथर्वा त्रिबलित्रिवेदीमूलाद्विनिर्गत्य वितायमाना ।
नानाभिचारोचितमेचकश्रीः श्रुतिर्यदीयोदररोमरेखा ॥ ७५ ॥

शिक्षैव साक्षाच्चरितं यदीयं कल्पश्रिया कल्पविधिर्यदीयः ।
यस्याः समस्तार्थनिरुक्तिरूपैर्निरुक्तविद्या खलु पर्यणंसीत् ॥७६॥

जात्या च वृत्तेन च भिद्यमानं छन्दोभुजद्वन्द्वमभूद्यदीयम् ।
श्लोकार्धविश्रान्तिमयीभविष्णु पर्वद्वयीसन्धिसुचिह्नमध्यम् ॥७७॥

---

अथ चतुर्दशश्लोक्या वाग्देवीमेव वर्णयति—**आसीदिति** ॥ अथर्वा श्रुतिरथर्ववेदः तिस्रो वलयः त्रिवलिः, 'त्रिवलिप्रसिद्धिः संज्ञा चेत्' इति वामनः। तद्रूपा त्रिवेदी सैव मूलं तस्माद्विनिर्गत्य वितायमाना वितन्यमाना तनोतेर्यकीत्यनुनासिकस्य विकल्पादात्वम् । अथर्वणस्तु त्रय्युद्धारः इति प्रसिद्धिः । नानाविधानामभिचाराणां हिंसाकर्मणामुचिता मेचकश्रीः कृष्णकान्तिर्यस्याः सा । अन्यत्र अनाभिचारः नञ्समासः, स न भवतीति नानाभिचारः पुनरपि नञ्समासः नाभिप्राप्तिरित्यर्थः । तस्य उचिता सा च सा मेचका श्रीर्यस्याः सा तथोक्ता यदीया यस्याः सम्बन्धिनी उदरे रोमरेखा रोमराजिरासीत् ॥ ७५ ॥

**शिक्षेति** ॥ शिक्षाग्रन्थ एव साक्षात्स्वयमेव यदीयं चरितमभूत्परोपदेशरूपत्वादिति भावः । यदीय आकल्पविधिः प्रसाधनविधिः कल्पश्रिया कर्मकाण्डभूतया कल्पसूत्रलक्ष्म्या निर्वृत्त इति शेषः । निरुक्तविद्यैव यस्याः समस्तार्थानां सर्वपदार्थानां निरुक्तिरूपैर्निर्वचनभङ्गिभिः पर्यणंसीत् खलु तद्रूपेण परिणतासीदित्यर्थः । णमेर्लुङि अस्तिसेचोऽपृक्त इतीडागमः यमरमनमातांसक्चेति सगिडागमौ, इट ईटीति सलोपः । उपसर्गादसमासेऽपि णोपदेशस्येति णत्वम् ॥

**जात्येति** ॥ जात्या मात्रावृत्तरूपेण वृत्तेन वर्णवृत्तरूपेण च भिद्यमानं द्विधाभूतं तथा श्लोकार्धे विश्रान्तिमयीभविष्णु विश्रान्तिरूपतामापन्नं छन्दश्छन्दोग्रन्थः पर्वणोः कूर्परपूर्वोत्तरभागयोः द्वयी तस्याः सन्धिस्तेन सुचिह्नं सुव्यक्तं मध्यं कूर्परस्थानं यस्य तद्यदीयं भुजद्वन्द्वमभूत् द्विविधं छन्दो भुजयुगत्वेन श्लोकार्धविश्रान्तिः कूर्परत्वेन पर्यणंसीदित्यर्थः ॥ ७७ ॥

असंशयं सा गुणदीर्घभावकृतां दधाना विततिं यदीया ।
विधायिका शब्दपरम्पराणां किञ्चारचि व्याकरणेन काञ्ची ॥

स्थितैव कण्ठे परिणम्य हारलता बभूवोदिततारवृत्ता ।
ज्योतिर्मयी यद्भजनाय विद्या मध्येऽङ्गमङ्केन भृता विशङ्के ॥ ७९॥

अवैमि वादिप्रतिवादिगाढस्वपक्षरागेण विराजमाने ।
तौ पूर्वपक्षोत्तरपक्षशास्त्रे रदच्छदौ भूतवती यदीयौ ॥ ८० ॥

---

**असंशयमिति** ॥ किञ्च गुणस्य सूत्रस्य दीर्घभावेन दैर्घ्येण कृतां विततिं विस्तारं दधाना अन्यत्र गुणश्च दीर्घश्च भावप्रत्ययश्च कृत्प्रत्ययश्च तेषां विततिं दधानेति विपरिणामः । शब्दपरम्पराणां शिञ्जितपरम्पराणां विधायिका जनयित्री अन्यत्र सुप्तिङन्तशब्दपरम्पराणां विधायकेन साधकेनेति विपरिणामः। सा प्रसिद्धा यदीया काञ्ची व्याकरणेनारचि रचिता असंशयमित्यर्थः । अर्थाभावेऽव्ययीभावः ॥ ७८ ॥

**स्थितेति** ॥ कण्ठे वाचि अन्यत्र ग्रीवायां स्थिता उदिता उक्तास्तारा अश्विन्यादयो येषु तानि वृत्तानि पद्यानि यस्यां सा अन्यत्र उदिततारा निर्जित-शुद्धमौक्तिका सा च सा वृत्ता वर्तुला च तथोक्ता । 'तारोमुक्तादिसंशुद्धौ तरले शुद्धमौक्तिके । वृत्तं पद्ये चरे त्रिषु' इति च क्रमाद्विश्वामरौ । अङ्गानां शिक्षादीनां अन्यत्र करादीनां मध्ये मध्येऽङ्गं, "पारे मध्ये" इत्यादिनाव्ययीभावः । अङ्केन एकद्व्यादिसङ्ख्याचिह्नेन भृता पूर्णा अन्यत्र अङ्केन क्रोडेनोरसा भृता भरतेर्बिभर्तेश्च कर्मणि क्तः । 'अङ्कः क्रोधेऽन्तिके चिह्ने' इत्युभयत्रापि वैजयन्ती । ज्योतिर्मयी नक्षत्रप्रधाना अन्यत्र भास्वती, 'ज्योतिस्ताराग्निभाज्वालादृक्पुत्रार्धेऽध्वरात्मसु' इति च वैजयन्ती । विद्या ज्योतिर्विद्यैव परिणम्य विकृत्य यद्भजनाय यस्याः सेवनाय हारलता बभूव विशङ्के इत्युत्प्रेक्षा ॥ ७९ ॥

**अवैमीति** ॥ वादिप्रतिवादिनोर्गाढेन निबिडेन स्वपक्षे रागेणाभिनिवेशेन अन्यत्रान्तःपार्श्वरक्तत्वेन विराजमाने पूर्वपक्षोत्तरपक्षशास्त्रे यदीयौ तौ प्रसिद्धौ

ब्रह्मार्थकर्मार्थकवेदभेदा द्विधा विधाय स्थितयात्मदेहम् ।
चक्रे पराच्छादनचारु यस्या मीमांसया मांसलमूरुयुग्मम् ॥८१॥

उद्देशपर्वण्यपि लक्षणेऽपि द्विधोदितैः षोडशभिः पदार्थैः ।
आन्वीक्षिकीं यद्दशनद्विमालीं तां मुक्तिकामाकलितां प्रतीमः ॥८२

---

रदच्छदौ ओष्ठौ भूतवती बभूवतुः, भवतेः क्तवतुप्रत्ययः । अवैमि उत्प्रेक्षे ते अत्र ओष्ठावपि वादिनावभिवादनव्यापारवन्तौ रागवन्तौ पूर्वोत्तरीभूतौ चेति द्रष्टव्यम् ॥ ८० ॥

**ब्रह्मेति** ॥ पराच्छादनचारूत्कृष्टवसनाभिरामं मांसमस्यास्तीति मांसलं पीवरं सिध्मादित्वादिलच् । यस्या ऊरुयुग्मं परेषां प्रतिवादिनामाच्छादनेन तिरस्करणेन चारु शोभनमात्मदेहं स्वस्वरूपं चार्विति विशेषणान्नपुंसकं ग्राह्यम् । 'कायो देहः क्लीबपुंसोः' इत्यमरः । ब्रह्मैवार्थः प्रतिपाद्यार्थो यस्य सः, शेषाद्विभाषा इति कप् । भावप्रधानो निर्देशः । ब्रह्मार्थकर्मार्थकत्वाभ्यां यो वेदस्य भेदो द्वैविध्यं तस्माद्धेतो द्विधा विधया पूर्वोत्तरमीमांसारूपेण द्विविधं कृत्वा स्थितया प्रतिष्ठितया मीमांसया द्वैविध्यया चक्रे कृतम् । गम्योत्प्रेक्षा ॥ ८१ ॥

**उद्देशेति** ॥ यस्या दशनानां द्वयोर्मालयोः समाहारो द्विमाली आवन्तो वेति स्त्रीत्वे द्विगोरिति ङीप् । तामेव आकलितां गुम्फितां मुक्तैव मुक्तिका मुक्ताशब्दात् स्वार्थे कप्रत्यये केऽण इति ह्रस्वे तस्य भाषितपुंस्काच्चेति कात्पूर्वस्येत्वम् । तां मुक्तावलीमित्यर्थः । उद्देशो नामतः कीर्तनं तस्य पर्वण्यवसरेऽपि व्यावर्तकं लक्षणं तत्पर्वण्यपीत्यर्थः । द्विधोदितैः द्विवारमुक्तैरित्यर्थः । अन्यत्र लक्षणे सामुद्रिकलक्षणे द्विधोदितैर्द्वैगुण्येनोक्तैरित्यर्थः । उभयषोडशदशनत्वस्य भाग्यलक्षणत्वादिति भावः । षोडशभिः पदार्थैः प्रमाणादिनिग्रहस्थानान्तैरुपलक्षितां मुक्तिं कामयन्त इति मुक्तिकामाः मुमुक्षवः शीलिकामिभक्षाचरिभ्यो ण इति णप्रत्ययः । तैराकलितामभ्यस्तां प्रमाणादिसूत्रेण पदार्थानां तत्त्वज्ञानान्निश्रेयसाधिगम इत्युक्तत्वादिति भावः । तां प्रसिद्धां प्रत्यक्षागमाभ्यामीक्षितस्य पश्चादीक्षणमन्वीक्षा सा प्रयोजनमस्य इत्यान्वीक्षिकी तर्कविद्या, प्रयोजनमिति

**तर्का रदा यद्वदनस्य तर्क्या वादेऽस्य शक्तिः क तथान्यथा तैः ।**
**पत्रं क दातुं गुणशालिपूगं क वादतः खण्डयितुं प्रभुत्वम् ॥८३॥**
**सपल्लवं व्यासपराशराभ्यां प्रणीतभावादुभयीभविष्णु ।**
**तन्मत्स्यपद्माद्युपलक्ष्यमाणं यत्पाणियुग्मं ववृते पुराणम् ॥ ८४ ॥**

---

ठञ् । तां प्रतीमो जानीमः, प्रतिपूर्वादिणो लट् । द्विरावृत्तषोडशपदोदिततादृग्दन्तपङ्क्तियुगलत्वेन परिणतेत्युत्प्रेक्षार्थः । प्रतिपाद्यप्रतिपादकयोरभेदोपचारादान्वीक्षिक्येव तथा परिणतेत्युक्तम् । दशनद्विमालीमेवाकलितां मुक्तिकामिति श्लिष्टपदोपात्तेन रूपकेणोक्तोत्प्रेक्षायाः सङ्करः ॥ ८२ ॥

पुनर्दन्तानेव तर्कत्वेनापि उत्प्रेक्षते—**तर्का इति** ॥ यद्वदनस्य सम्बन्धिनो रदा दन्ताः, 'रदना दशना दन्ता रदाः' इत्यमरः । तर्का ऊहाख्याः प्रमाणानुग्राहकज्ञानविशेषाः तन्मयास्तर्क्या उत्प्रेक्ष्याः । अन्यत्र तर्कवत् कर्कशा इत्यर्थः । तथा हि अस्य वदनस्य तैस्तथाभूतैर्विना वादे कथायामभिवदनव्यापारे च तथा तादृशी शक्तिः क । पत्रं पत्रिकां दातुं पत्रालम्बनं कर्तुं अन्यत्र ताम्बूलीदलादिकं दातुं खण्डयितुं शक्तिः क । यतेः ददातेश्च तुमुन् । तदा गुणशालिनां प्रतिभादिगुणवतां वावदूकानां पूगं वृन्दं वादतो वादेन खण्डयितुं भङ्क्तुं अन्यत्र वेति छेदः अदतो भक्षयतः गुणशालिरसाढ्यं पूगं पूगीफलं, 'पूगः क्रमुकवृन्दयोः' इत्यमरः । खण्डयितुं शकलयितुं प्रभुत्वं सामर्थ्यं क ? श्लेषप्रतिभोत्थापितेयं दन्तानां तर्कपरिणतित्वेनोत्प्रेक्षेति सङ्करः ॥ ८३ ॥

**सपल्लवमिति** ॥ व्यासपराशराभ्यां प्रणीतभावात् प्रणीतत्वादुभयीभविष्णु द्विगुणीभावुकम् । "भुवश्च" इतीष्णुच् । यद्यप्यष्टादशपुराणानां कर्ता सत्यवतीसुतः । तथापि—पुराणं वैष्णवं चक्रे यस्तं वन्दे पराशरमित्यादि प्रसिद्धेरेवमुक्तम् । तत्प्रसिद्धं मत्स्यपद्मपुराणादिसंज्ञाभिरादिशब्दात् कूर्मस्कान्दादिसङ्ग्रहः । अन्यत्र मत्स्यपद्मादिरेखाभिरादिशब्दात् ध्वजकलशादिसङ्ग्रहः । उपलक्ष्यमाणमङ्कितमित्यर्थः । सपल्लवं सविस्तारं, 'पल्लवं त्वस्त्री प्रकोष्ठे चापि विस्तृतौ' इति वैजयन्ती । अन्यत्र सह सदृशं पल्लवेन सपल्लवम्, "अव्ययं

आकल्पविच्छेदविवर्जितो यः स धर्मशास्त्रव्रज एव यस्याः ।
पश्यामि मूर्धा श्रुतिमूलशाली कण्ठे स्थितः कस्य मुदे न वृत्तः ॥

भ्रुवौ दलाभ्यां प्रणवस्य यस्यास्तद्बिन्दुना भालतमालपत्रम् ।
तदर्धचन्द्रेण विधिर्विपञ्चीनिक्वाणनाकोणधनुः प्रणिन्ये ॥ ८६ ॥

द्विकुण्डली वृत्तसमाप्तलिप्याः कराङ्गुली काञ्चनलेखनीनाम् ।
कैश्यं मसीनां स्मितभाः कठिन्याः काये यदीये निरमायि सारैः॥

---

विभक्ति" इत्यादिना सहशब्दस्य गुणीभूतसादृश्यार्थेऽव्ययीभावः । अव्ययीभावे चाकाल इति सहशब्दस्य सभावः । 'सह सादृश्यसाकल्ययौगपद्यसमृद्धिषु' इति विश्वः । पुराणं पद्मादि यस्याः पाणियुग्मं वव्रते पाणिपद्मत्वेन परिणतमित्यर्थः । उत्प्रेक्षा ॥ ८४ ॥

**आकल्पेति** ॥ आकल्पं कल्पान्तपर्यन्तं विच्छेदेन विवर्जितः अविच्छिन्नसम्प्रदाय इत्यर्थः । अन्यत्र प्रसाधनविच्छेदरहितो नित्यभूषित इत्यर्थः । श्रुतिर्वेद एव । मूलं मूलप्रमाणं तेनान्यत्र श्रुतिमूलाभ्यां श्रोत्रप्रान्ताभ्यां च शालत इति तथोक्तः । 'वेदे श्रवसि च श्रुतिः' इत्यमरः । कण्ठस्थितो मुखस्थः अन्यत्र गलस्थः यो धर्मशास्त्राणां मन्वादिस्मृतीनां व्रजः स एव यस्या देव्याः मूर्धा वृत्तः संवृत्तः परिणत इत्यर्थः । अन्यत्र वर्तुलः कस्य मुदे न? सर्वस्यापि स्यादेवेत्यर्थः । पश्यामि उत्प्रेक्षे ॥ ८५ ॥

अथोङ्काराक्षरस्य नागरलिप्यर्धाक्षरभेदमाश्रित्योत्प्रेक्षते—**भ्रुवाविति** ॥ विधिर्ब्रह्मा प्रणवस्योङ्कारस्य दलाभ्यामुभयप्रान्तरेखाभ्यां यस्या देव्याः भ्रुवौ तथा तस्य प्रणवस्य बिन्दुना बिन्द्वाकाररेखया भाले तमालपत्रं तिलकं तमालपत्रतिलकचित्रकाणि विशेषकम्' इत्यमरः । तथा तस्य प्रणवस्यार्धचन्द्रेणार्धचन्द्राकाररेखया विपञ्च्यास्तन्निक्वाणनाया वीणाया वादनस्य कोणधनुः कोणभूतं धनुराकारं साधनञ्च । 'कोणो वीणादिवादनम्' इत्यमरः । प्रणिन्ये निर्ममे "उपसर्गादसमासेऽपि णोपदेशस्य" इति णत्वम् । उत्प्रेक्षा ॥ ८६ ॥

**द्विकुण्डलीति** ॥ यदीये काये देहे द्वयोः कुण्डलयोः समाहारो द्विकुण्डली कर्णकुण्डलद्वयं वृत्ताया वर्तुलायाः समाप्तिलिप्या अवसानरेखाया

या सोमसिद्धान्तमयाननेव शून्यात्मतावादमयोदरेव ।
विज्ञानसामस्त्यमयान्तरेव साकारतासिद्धमयाखिलेव ॥ ८८ ॥

भीमस्तयागद्यत मोदितुं ते वेला किलेयं तदलं विषद्य ।
मया निगाद्यं जगतीपतीनां गोत्रं चरित्रं च यथावदेषाम् ॥८९॥

---

विन्दुद्वयरूपायाः सारैः सारांशैर्निरमायि निर्मिता । माङो लुङि "आतो युक् चिण्कृतोः" इति युगागमः । कराङ्गुली कराङ्गुल्यः जातावेकवचनम् । काञ्चन-लेखनीनां स्वर्णकणिकानां सारैस्तथा केशानां समूहः कैश्यं, केशाश्वाभ्यां यञ्चान्य-तरस्याम्" इति यञ्प्रत्ययः । मसीनां सारैस्तथा स्मितभा मन्दहासकान्तिः कठिन्याः घटिकायाः, 'घटिकायान्तु कठिनी' इति विश्वः । सारैर्निरमायी-त्युत्प्रेक्षा ॥ ८७ ॥

**येति** ॥ या देवी सोमसिद्धान्तः कापालिकदर्शनं सोमस्येन्दोः सिद्धान्तः अखण्डरूपश्च तन्मयाननेव स्थिता तथा शून्यस्यैवात्मतावादो माध्यमिकदर्शन-मथ च शुन्यात्मता निस्स्वरूपता तद्वादो नास्तिवादस्तन्मयमुदरं यस्याः सेव नासिकोदरेत्यादिना विकल्पादनीकारः । निराकारविज्ञानमात्रवादी बाह्यापलापी योगाचारस्तन्मतं विज्ञानसामस्त्यम् । अथ विशिष्टज्ञानसम्पत्तिश्च तन्मयमन्तरङ्गं यस्याः सेव । साकारज्ञानवादी सौत्रान्तिकः ज्ञानानां नीलपीताद्याकारता साका-रता तत्सिद्धिस्तन्मतमथ शोभनाकारतासम्पत्तिश्च तन्मयाः अखिलाः सर्वावयवा यस्याः सेव स्थितेति सर्वत्रोत्प्रेक्षा ॥ ८८ ॥

**भीम इति** ॥ अथ तया देव्या भीमो भीमभूपतिरगद्यत निरुक्तः किमिति हे राजन्! इयन्ते तव मोदितुं वेला किल? समयः खलु? काल-समयवेलासु तुमुन् । तत्तस्माद्विषद्य खेदित्वालं विषादो न कर्तव्य इत्यर्थः । "अलङ्खल्वोः" इत्यादिना क्त्वाप्रत्ययः । कुतः येषां जगतीपतीनां गोत्रं कुलं नाम च, 'गोत्रं नाम्नि कुलेऽपि च' इति विश्वः । चरित्रञ्च मया निगाद्यं वक्तव्यमहं वक्ष्यामीत्यर्थः । ऋहलोर्ण्यत्, गदमदेत्यादिसूत्रे अनुपसर्ग एव यतो विधानात् ॥ ८९ ॥

अविन्दतासौ मकरन्दलीलां मन्दाकिनी यच्चरणारविन्दे ।
अत्रावतीर्णा गुणवर्णनाय राज्ञां तदाज्ञावशगास्मि कापि ॥ ९० ॥

तत्कालवेद्यैः शकुनस्वराद्यैराप्तामवाप्तां नृपतिः प्रतीत्य ।
तां लोकपालैकधुरीण एष तस्यै सपर्यामुचितां दिदेश ॥ ९१ ॥

दिगन्तरेभ्यः पृथिवीपतीनामाकर्षकौतूहलसिद्धविद्याम् ।
ततः क्षितीशः स निजां तनूजां मध्येमहाराजकमाजुहाव ॥ ९२ ॥

दासीषु नासीरचरीषु जातं स्पीतं क्रमेणालिषु वीक्षितासु ।
स्वाङ्गेषु रूपोत्थमथाद्भुताब्धिमुद्वेलयन्तीमवलोककानाम् ॥ ९३ ॥

---

कात्वं किमर्थमागता चेत्याकाङ्क्षायामाह—**अविन्दतेति** ॥ असौ प्रसिद्धा मन्दाकिनी यस्य पुंसश्चरणारविन्दे मकरन्दलीलां कन्दलिकां अविन्दत तस्य पुंसः आज्ञया वशगा वशवर्तिनी कापि या काचिदहं, किं विशेषचिन्तयेति भावः । राज्ञां गुणवर्णनायात्र स्वयम्वरसभायामवतीर्णास्मि ॥ ९० ॥

**तत्कालेति** ॥ लोकपालैरिन्द्रादिभिः सहैकधुरं वहतीत्येकधुरीणः समानस्कन्धः, "एकधुराल्लुक् च" इति खप्रत्ययः । एष नृपतिर्भीमः तत्काले वेद्यैर्वेदितुं शक्यैः शकुनः पक्षिस्वरश्चन्द्रादिनाडिकाभेदः आद्यशब्दादक्षिस्पन्दादि-सङ्ग्रहः । तैरुपायैरवाप्तां तां वाग्देवीमाप्तां हितां प्रतीत्य निश्चित्य तस्यै उचितां सपर्यां पूजां दिदेश समर्पयामास ॥ ९१ ॥

**दिगिति** ॥ ततो देवीपूजानन्तरं सः क्षितीशः भीमो दिगन्तरेभ्यः पृथिवीपतीनामाकर्षकौतूहले आकर्षणकर्मणि सिद्धविद्यां सिद्धमन्त्रममोघवृत्ति-मित्यर्थः । निजान्तनूजां महतो राजकस्य राजसमूहस्य मध्ये मध्येमहाराजक-माजुहाव आहूतवान्, ह्वयतेर्लिटि अभ्यस्तस्य चेति द्विर्भावात्प्राक्सम्प्रसारणे रूपसिद्धिः ॥ ९२ ॥

अथ षोडशश्लोक्या दमयन्तीं वर्णयति—**दासीष्वित्यादि** ॥ कीदृशीं नासीरे चरन्तीति नासीरचरीष्वग्रेसरीषु, चरेष्टः, टित्वात् ङीप् । दासीषु परि-

स्निग्धत्वमायाजललेपलोपसयत्नरत्नांशुमृजांशुकाभाम् ।
नेपथ्यहीरद्युतिवारिवर्तिस्वच्छायसच्छायनिजालिजालाम् ॥ ९४ ॥

विलेपनामोदमुदागतेन तत्कर्णपूरोत्पलसर्पिणा च ।
रतीशदूतेन मधुव्रतेन कर्णे रहः किञ्चिदिवोच्यमानाम् ॥ ९५ ॥

---

चारिकासु वीक्षितासु सतीषु जातमुत्पन्नं क्रमेणालिषु सखीषु वीक्षितासु स्फीतं प्रवृद्धं स्फायः स्फी निष्ठायामिति स्फीभावः । रूपोत्थं सौन्दर्यजन्यं अवलोककानां द्रष्टॄणां अद्भुताब्धिमाश्चर्यसमुद्रं स्वाङ्गेषु वीक्षितेषु सत्सूद्वेलयन्तीं उद्वेलं कुर्वन्तीं वेलामतिलङ्घयन्तीमित्यर्थः । उद्वेलशब्दात् तत्करोतीति ण्यन्ताच्छतरि ङीप् । अत्रैकस्मिन्नद्भुताब्धौ क्रमेणानेकेषाञ्जातत्वस्फीतत्वोद्वेलत्वानां वृत्तिकथनात् पर्यायालङ्कारभेदः । एकस्मिन्ननेकमनेकस्मिन्नेकमिति लक्षणात् ॥ ९३ ॥

**स्निग्धत्वेति** ॥ पुनः स्निग्धत्वं मासृण्यगुणः मायाजलं जलगर्भताख्यो दोषः लेपो रागाख्यो दोषः, 'रागत्रासश्च बिन्दुश्च रेखा च जलगर्भता । सर्वरत्नेष्वमी पञ्च दोषाः साधारणा मताः' इति वाग्भटः । तयोरभावो लोपः । ताभ्यां सयत्नानि उपलक्षणमेतत् गुणसम्पत्तिदोषविरहाभ्यां शुद्धानीत्यर्थः । यती प्रयत्न इति धातोः क्तः श्वीदितो निष्ठायामितीट् प्रतिषेधः । तेषां रत्नानां अंशुमृजा किरणप्रसादः सैवांशुकाभा वस्त्रप्रभा यस्यास्तां पुनः नेपथ्यहीरद्युतिवारिवर्तिस्वच्छायमाभरणवज्रप्रभाम्बुगतस्वप्रतिबिम्बं, विभाषा सेनेत्यादिना छायाशब्दस्य नपुंसकत्वं, तेन सच्छायं सवर्णं निजालिजालं स्वसखीकुलं यस्यास्तां अत्र भूषामणिप्रभाझरमग्ने सखीजने स्वप्रतिबिम्बत्वोत्प्रेक्षया तासामपि तत्समानसौन्दर्यं वस्तु व्यजते ॥ ९४ ॥

**विलेपनेति** ॥ विलेपनस्याङ्गरागस्यामोदे सौरभे मुदा प्रीत्यागतेन तथा तस्याः कर्णपूरोत्पलं सर्पतीति तत्सर्पिणा तद्गन्धाकृष्टेन च रतीशदूतेन तदुद्दीपकेनेत्यर्थः । मधुव्रतेन कर्णे किञ्चिद्रहो रहस्यं उच्यमानामिव कामदेवसन्दिष्टं किमप्युपदिश्यमानामिव स्थितामुत्प्रेक्षा । तया च तस्यास्तदा किलकिञ्चितादिशृङ्गारचेष्टाविर्भावो व्यज्यते ॥ ९५ ॥

विरोधिवर्णाभरणाश्मभासां मल्लाजिकौतूहलमीक्षमाणाम् ।
स्मरस्वचापभ्रमचालिते नु भ्रुवौ विलासाद्वलिते वहन्तीम् ॥ ९६

सामोदपुष्पाशुगवासिताङ्गीं किशोरशाखाग्रशयालिमालाम् ।
वसन्तलक्ष्मीमिव राजभिस्तैः कल्पद्रुमैरप्यभिलष्यमाणाम् ॥९७॥

पीतावदातारुणनीलभासां देहोपदेहात् किरणैर्मणीनाम् ।
गोरोचनाचन्दनकुङ्कुमेणनाभीविलेपान् पुनरुक्तयन्तीम् ॥ ९८ ॥

---

**विरोधीति** ॥ पुनर्विरोधिवर्णानां नानावर्णानामाभरणाश्मनां भूषणमणीनां या भासः तासां मल्लाजिकौतूहलं मल्लयुद्धकौतुकं परस्पराक्रमणसंरम्भम् ईक्षमाणां पुनर्विलासाद्वलिते स्त्रीस्वभावाल्लीलाचलिते तत्रोत्प्रेक्षा स्मरेण स्वचापभ्रमाच्चालिते नु आदातुं कम्पिते इव स्थिते इत्यर्थः । कम्पने चलिः इति मित्वेऽपि ज्वलह्वलह्मलचलानामनुपसर्गाद्वेति विकल्पनाद्ध्रस्वाभावः । एवम्भूते भ्रुवौ वहन्तीम् ॥ ९६ ॥

**सामोदेति** ॥ पुनः सामोदं सहर्षं यथा तथा पुष्पाशुगेन कामेन वासितमावासीकृतमङ्गं वपुर्यस्यास्तां जगत्त्रयजिगीषोः कामस्यामोघसाधनत्वान्नित्याधिष्ठिताङ्गीमित्यर्थः । वासशब्दात् तत्करोतीति ण्यन्तात् कर्मणि क्तः । अन्यत्र गन्धवत्कुसुमवायुसुरभीकृताङ्गीम् । 'आमोदो हर्षगन्धयोराशुगौ वायुविशिखौ' इति विश्वामरौ । पुनः किशोरशाखाः कोमलाङ्गुल्योऽग्रशया अग्रपाणयो यासां ताः आलिमालाः सखीपङ्क्तयः यस्यास्तां, 'पञ्चशाखः शयः पाणिः' इत्यमरः । अन्यत्र किशोरशाखानां बाललतानाम् अग्रेषु शेरत इति तच्छया अधिकरणे शेतेरित्यच्प्रत्ययः । ता अलिमाला भृङ्गश्रेणयः यस्यां तां तैरभ्यागतैराजभिः कल्पद्रुमैरपि सर्वाभिलाषपूरकैरपीति भावः । वसन्तलक्ष्मीमिवाभिलष्यमाणां यथा सर्वाभिलाषपूरकैरपि कल्पवृक्षैर्वसन्तलक्ष्मीरपेक्ष्यते तद्वद्राजभिरपीति सात्विकोक्तिः ॥ ९७ ॥

**पीतेति** ॥ पुनः पीता अवदातास्सिता अरुणा नीलाश्च भासो येषां तेषां मणीनां किरणैर्देहस्योपदेहादुपलेपनात् क्रमेण गोरोचनादिचतुष्टयानुलेपान्

स्मरं प्रसूनेन शरासनेन जेतारमश्रद्दधतीं नलस्य ।
तस्मै स्वभूषाद्दृषदंशुशिल्पं बलद्विषः कार्मुकमर्पयन्तीम् ॥ ९९ ॥
विभूषणेभ्यो वरमंशुकेषु ततो वरं सान्द्रमणिप्रभासु ।
सम्यक् पुनः क्वापि न राजकस्य पातुं दृशा धातृकृतावकाशाम् ॥
प्राक् पुष्पवर्षैर्वियतः पतद्भिर्द्रष्टुं न दत्तामथ तद्द्विरेफैः ।
तद्भीतिभुग्नेन ततोमुखेन विधेरहो वाञ्छितविघ्नयत्नः ॥ १०१ ॥

---

पुनरुक्तयन्तीं सावर्ण्यात्पुनरुक्तान् कुर्वन्तीं एणनाभिः कस्तूरी, अत्र गोरोचनाद्यनुलेपचतुष्टयस्य यथासङ्ख्यसम्बन्धेन पीतादिमणिकिरणैकतापत्तिकथनाद्यथासङ्ख्यसङ्कीर्णः सामान्यालङ्कारः । लक्षणमुक्तम् ॥ ९८ ॥

**स्मरमिति** ॥ प्रसूनेन शरासनेन पुष्परूपचापेन नलस्य जेतारं स्मरं काममश्रद्दधतीमविश्वसतीमत एव तस्मै स्मराय स्वभूषाद्दृषदंशूनां निजाभरणमणिकिरणानां शिल्पं निर्माणं निर्मितमित्यर्थः । बलद्विषः कार्मुकमिन्द्रचापमर्पयन्तीं वीरधौरेयो नलः पुष्पचापदुर्जय इति मत्वा जयाय स्वाभरणमणिकिरणकल्पितमैन्द्रं धनुः द्रढीयस्तस्मै दधानामिव स्थितामित्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥ ९९ ॥

**विभूषणेभ्य इति** ॥ विभूषणेभ्यो वरं प्रथमं विभूषणेष्वासज्य ततोऽधिकं यथा तथांशुकेषु ततो वरमधिकं सान्द्रमणिप्रभासु सक्तयेति शेषः । राजकस्य राजसमूहस्य, गोत्रोक्षेत्यादिना वुञ्प्रत्ययः । दृशा दृष्ट्या सम्यक् पातुं पुनः स्थैर्येण द्रष्टुं धात्रा कृतावकाशां न भवन्तीमुत्तरोत्तरविषयाकृष्टा पूर्वपूर्वविस्मारणी राजकदृष्टिर्न क्वापि क्षणमवस्थितेत्यर्थः । तदङ्गसङ्गस्त्वद्यापि दवीयानिति भावः । अत्र विभूषणानामुत्तरोत्कर्षद्वारेण राजकदृष्टेः क्रमेण विभूषणाद्यनेकाधारसम्बन्धोक्तेः सारालङ्कारः । तत्सङ्कीर्णः पर्यायभेदश्च । उत्तरोत्तरमुत्कर्षः सारः ॥ १०० ॥

**प्रागिति** ॥ पुनः प्राक् प्रथमं वियतोऽम्बरात्पतद्भिः पुष्पवर्षैरथ तद्द्विरेफैः पुष्पाकृष्टभृङ्गैस्ततोऽनन्तरं तद्भीतिभुग्नेन भृङ्गभयनम्रेण मुखेन च द्रष्टुं

एतद्वरं स्यामिति राजकेन मनोरथातिथ्यमवापिताय ।
सखीमुखायोत्सृजतीमपाङ्गात्कर्पूरकस्तूरिकयोः प्रवाहम् ॥१०२॥

स्मितेच्छुदन्तच्छदकम्पकिञ्चिद्दिगम्बरीभूतरदांशुवृन्दैः ।
आनन्दितोर्वीन्द्रमुखारविन्दैर्मुदं नुदन्तीं हृदि कौमुदीनाम् ॥१०३

प्रत्यङ्गभूषाच्छमणिच्छलेन यल्लग्नतन्निश्चललोकनेत्राम् ।
हाराग्रजाग्रद्गुरुडाश्मरश्मिपीनाभनाभीकुहरान्धकारम् ॥ १०४ ॥

---

न दत्तामेतैः प्रतिबद्धदर्शनामित्यर्थः । राजकस्येति शेषः । तथाहो आश्चर्यं विधेर्दैवस्य वाञ्छितविघ्नयत्नो वाञ्छितार्थविघातव्यसनितेत्यर्थान्तरन्यासः । तत्र चैकस्या राजदृष्टेः क्रमेण भैमीदर्शनप्रतिबन्धकपुष्पवृक्षाद्यनेकाधारसम्बन्धोक्त्येन पर्यायेण सङ्करः ॥ १०१ ॥

**एतदिति** ॥ पुरा राजकेन राजसमूहेन वरं श्रेष्ठं सखीमुखं स्यां तदात्मकं भवेयं, प्रार्थनायां लिङ् । इति मनोरथस्यातिथ्यमतिथित्वं ब्राह्मणादित्वात् ष्यञ्प्रत्ययः । अवापिताय प्रापिताय एतन्मुखत्वे भैमीदृष्टिगोचरत्वसिद्धेरिति भावः । सखीमुखायापाङ्गात्कर्पूरस्य कस्तूर्येव कस्तूरिका, स्वार्थे कः केऽण इति ईकारस्य ह्रस्वः । तस्याश्च प्रवाहमुत्सृजतीं प्रवर्तयन्तीं सखीमुखमेव वीक्षमाणामित्यर्थः । आच्छिनद्योर्नुमिति विकल्पान्नुमभावः । दृष्टीनां सितासितत्वेनेत्थं निर्देशः । अत एव विषयनिगरणेन विषयिमात्रोपनिबन्धाद्भेदे अभेदरूपातिशयोक्त्यलङ्कारः ॥ १०२ ॥

**स्मितेति** ॥ पुनरानन्दितानि उर्वीन्द्रमुखारविन्दानि यैस्तैः, अत एव स्मितेच्छोः स्मितोद्युक्तस्य दन्तछदस्य अधरस्य कम्पेन किञ्चिद्दिगम्बरीभूतैरीषत् प्रकाशीभूतैर्यद्वा दिशामम्बरीभूतैर्दिग्व्यापकैः रदांशूनां दन्तकान्तीनां वृन्दैः कौमुदीनां मुदं हृदि नुदन्तीं कौमुदीमधुरमन्दहासामित्यर्थः ॥ १०३ ॥

**प्रत्यङ्गेति** ॥ पुनः प्रत्यङ्गं प्रत्यवयवं ये भूषाच्छमणयः तेषां छलेन येष्वङ्गेषु लग्नानि तेष्वङ्गेषु निश्चलानि हर्षपारवश्यादिति भावः । तयोः खञ्जकुब्ज-

तद्गौरसारस्मितविस्मितेन्दुप्रभाशिरःकम्परुचोऽभिनेतुम् ।
विपाण्डुतामण्डितचामरालीनानामरालीकृतलास्यलीलाम् ॥१०५॥
तदङ्गभोगावलिगायनीनां मध्ये निरुक्तिक्रमकुण्ठितानाम् ।
स्वयं धृतामप्सरसां प्रसादं ह्रियं हृदोमण्डनमर्पयन्तीम् ॥१०६॥
तारा रदानां वदनस्य चन्द्रं रुचा कचानाञ्च नभो जयन्तीम् ।
आकण्ठमक्ष्णोर्द्वितयं मधूनि महीभृतः कस्य नभोजयन्तीम् ॥

---

वत्समासः । तानि लोकनेत्राणि यस्यास्तामिवेति सापह्नवोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । पुनः हाराग्रे जाग्रतः प्रकाशमानस्य गरुडाश्मनो गरुत्मद्रत्नस्य रश्मिभिः पीनाभं सान्द्रप्रभं नाभीकुहरान्धकारं यस्यास्तां अत्र मरकतच्छायस्यान्धकारैः साम्योक्तेः सामान्यालङ्कारः ॥ १०४ ॥

**तदिति** ॥ पुनस्तस्या भैम्याः गौरसारस्मितेन विशदोत्कृष्टमन्दहासेन विस्मिताया विस्मयाविष्टाया इन्दुप्रभायाश्चन्द्रिकायाः शिरः कम्परुचोऽभिनेतुमनुकर्तुमिवेत्युत्प्रेक्षा । विपाण्डुतामण्डिता धावल्यशोभिताश्चामराल्यश्चामरपङ्क्तय एव नानामराल्यो राजहंस्यस्ताभिः कृता लास्यलीला नृत्यचेष्टा यस्यास्तां निजमन्दहासजनितविस्मयकम्प्यमानचन्द्रिकाशिरश्चारुचामरचयवीज्यमानामित्यर्थः ॥

**तदङ्गेति** ॥ सैवाङ्गं काव्यार्थतया शरीरं यासान्तास्तदङ्गास्तद्विषया इत्यर्थः । शब्दार्थौ मूर्तिराख्याताविति लक्षणात् । तासाम्भोगावलीनां प्रबन्धविशेषाणां गायन्यो गायिकाः, कर्तरि ल्युट् ङीप् । तासां मध्ये गानमध्ये निरुक्तिक्रमेषु निष्कृष्टोच्चारणप्रकारेषु कुण्ठितानां लुप्तप्रतिभानामप्सरसां स्वयं धृतां हृदः स्वान्तस्य वक्षसश्च मण्डनमलङ्कारभूतां ह्रियं लज्जामेव प्रसादं परितोषिकमर्पयन्तीं प्रयच्छन्तीं तद्दोषज्ञानेन ताः अपि ह्रेपयन्तीमित्यर्थः । गायकेभ्यः स्वधृतवस्त्रालङ्कारादिकं प्रीत्या प्रयच्छन्तीम् । अत्र तु ह्रीदानमेव तद्दानमित्युत्प्रेक्षा ह्रियोऽपि स्वयं धृतत्वादलङ्कारत्वात् तद्विषयत्वाच्चेति भावः ॥ १०६ ॥

**तारा इति** पुनः रदानां दन्तानां रुचा कान्त्या तारा नक्षत्राणि वदनस्य रुचा चन्द्रं कचानां केशानां रुचा नभश्च जयन्तीम् अत एव कस्य महीभृतो-

अलङ्कृताङ्गाद्भुतकेवलाङ्गीं स्तवाधिकाध्यक्षनिवेद्यलक्ष्मीम् ।
इमां विमानेन सभां विशन्तीं पपावपाङ्गैरथ राजराजिः ॥१०८॥

आसीदसौ तत्र न कोऽपि भूपस्तन्मूर्तिरूपोद्भवदद्भुतस्य ।
उल्लेसुरङ्गानि मुदा न यस्य विनिद्ररोमाङ्कुरदन्तुराणि ॥ १०९ ॥

अङ्गुष्ठमूर्ध्ना च निपीडिताग्रा मध्येन भागेन च मध्यमायाः ।
आस्फोटि भैमीमवलोक्य तत्र न तर्जनी केन जनेन नाम ॥११०

---

ऽक्ष्णोर्द्वितयं मधूनि क्षौद्राणि आकण्ठमागल नभोजयन्तीं सर्वस्यापि भोजयन्ती-मित्यर्थः । नञर्थस्य न-शब्दस्य सुप्सुपेति समासः । गतिबुद्धीत्यादिना अणि कर्तुरक्षिद्वितयस्य कर्मत्वम् । "निगलनचरणार्थेभ्यश्च' इति परस्मैपदम् । सकल-राजलोकलोचनासेचनकमासीदित्यर्थः । अत्रोत्तरवाक्यार्थस्य पूर्ववाक्यार्थहेतु-कत्वात् काव्यलिङ्गं तच्च संसृष्टाभिस्तारायुपमाभिः सङ्कीर्यते । तस्य न भोज-यन्तीं न भोजयन्तीमिति यमकेन संसृष्टिः ॥ १०७ ॥

**अलंकृतेति** ॥ अथाह्वानानन्तरं अलङ्कृताङ्गेभ्योऽद्भुतानि केवलान्य-नलङ्कृतानि अङ्गानि यस्यास्तां, अनेन माधुर्यगुण उक्तः, अभूषणेऽपि रम्यत्वं माधुर्यमिति लक्षणात् । स्तवादधिकाः स्तोतुमशक्याः अध्यक्षनिवेद्या प्रत्यक्ष-गम्याः लक्ष्म्यः शोभाः यस्यास्तामिति बहुवचनान्तोत्तरपदो बहुव्रीहिः । अन्यथैकवचनान्तलक्ष्मीशब्दस्य उरःप्रभृतिकत्वात् कप्रसङ्गः शैषिकस्तु वैभाषिकः । विमानेन शिविकया सभां विशन्तीं इमां भैमीं राजराजिरपाङ्गैः पपौ अत्यादरेण सविलासमद्राक्षीदित्यर्थः ॥ १०८ ॥

अथ राज्ञामद्भुतचेष्टां वर्णयति—**आसीदिति** ॥ तत्र सभायां असा-वीदशो भूपः कोऽपि नासीत् तस्या भैम्या मूर्तिरूपेणाङ्गसौन्दर्येणोद्भव-न्नद्भुतरसो यस्य तस्य भूपस्याङ्गानि मुदा विनिद्रैरुदितैः रोमाङ्कुरैः पुलकैः दन्तु-राणि विषमाणि सन्ति नोल्लेसुः नोल्लसितानि सर्वस्याप्यङ्गानि उल्लेसुरेवेत्यर्थः ॥

**अङ्गुष्ठेति** ॥ तत्र सभायां भैमीमवलोक्याङ्गुष्ठस्य मूर्ध्ना अग्रेण तथा मध्यमाया मध्याङ्गुलेर्मध्येन भागेन च निपीडितमग्रं यस्याः सा तर्जनी केन

अस्मिन् समाजे मनुजेश्वरेण तां खञ्जनाक्षीमवलोक्य केन ।
पुनःपुनर्लोलितमौलिना न भ्रुवोरुदक्षेपितरां द्वयी वा ॥ १११ ॥

स्वयम्वरस्याजिरमाजिहानां विभाव्य भैमीमथ भूमिनाथैः ।
इदं मुदा विह्वलचित्तभावादवादि खण्डाक्षरजिह्मजिह्मम् ॥ ११२

रम्भादिलोभात् कृतकर्मभिर्भूः शून्यैव माभूत् सुरभूमिपान्थैः ।
इत्येतयालोपि दिवोऽपि पुंसा वैमत्यमत्यप्सरसा रसायाम् ॥ ११३

---

नाम जनेन नास्फोटि न व्यभेदि न व्यभाजीति यावत् । स्फुट भेदने इति धातोश्चौरादिकात् कर्मणि लुङ् सर्वेणाप्यद्भुताऽनुभावस्फोटिका कृतैवेत्यर्थः ॥

**अस्मिन्निति** ॥ अस्मिन् समाजे सभायां खञ्जनस्येवाक्षिणी यस्यास्तां भैमीमवलोक्य लोलितमौलिना आश्चर्यात् कम्पितकिरीटेन केन मनुजेश्वरेण राज्ञा भ्रुवोर्द्वयी भ्रूद्वयं वा पुनः पुनर्नोदक्षेपितरां सर्वेणातिशयेनोत्क्षिप्तैवेत्यर्थः । क्षिपेः कर्मणि लुङि किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे इत्यामुप्रत्ययः । अत्र शिरःकम्पभ्रूविकारावद्भुतावनुभावावुक्तौ ॥ १११ ॥

अथ राज्ञां वागारम्भाः प्रवृत्ता इत्याह—**स्वयम्वरस्येति** ॥ अथास्मिन्नेव स्वयम्वरस्याजिरं स्वयम्वरदेशमाजिहानां प्राप्नुवन्तीं, हाङः कर्तरि शानच् । भैमीं विभाव्य निर्वर्ण्य भूमिनाथै राजभिः मुदा हर्षेण हेतुना विह्वलचित्तभावात् व्यग्रचित्तत्वाद्धेतोरिदं वक्ष्यमाणं खण्डाक्षरमर्धोक्तवर्णं जिह्मजिह्मं कुण्ठजिह्मं यथा तथा अवादि उक्तं वदेः कर्मणि लुङ् ॥ ११२ ॥

अथ विंशतिश्लोक्या वागारम्भानेव वर्णयति—**रम्भेत्यादि** ॥ रम्भादिष्वप्सरःसु लोभात् कृतं कर्म यागादिर्यैस्तैः सुरभूमिपान्थैः स्वर्लोकपथिकैः, "पथो ण नित्यम्" इति णप्रत्ययः । भूरेव शून्या माभूदिति हेतोः अप्सरसोऽतिक्रान्तया अत्यप्सरसा एतया भैम्या दिवोऽपि पुंसां देवानामपि रसायां भूलोके वैमत्यं वैराग्यमलोपि लुप्तमिवेत्युत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । लुपेः कर्मणि लुङ् । अत्यप्सरसः भैम्याः सौन्दर्यात् स्वर्लोकमतिशेते भूलोक इति

रूपं यदाकर्ण्य जनाननेभ्यस्तत्तद्दिगन्ताद्वयमागमामः ।
सौन्दर्यसारादनुभूयमानादस्यास्तदस्माद्बहुना कनीयः ॥ ११४ ॥

रसस्य शृङ्गार इति श्रुतस्य क्व नाम जागर्ति महानुदन्वान् ।
कस्मादुदस्थादियमन्यथा श्रीर्लावण्यवैदग्ध्यनिधिःपयोधेः ॥११५॥

साक्षात्सुधांशुर्मुखमेव भैम्या दिवः स्फुटं लाक्षणिकः शशाङ्कः ।
एतद्भ्रुवौ मुख्यमनङ्गचापं पुष्पं पुनस्तद्गुणमात्रवृत्त्या ॥ ११६ ॥

---

भावः। अत्रान्त्यपादे मत्यमत्यमप्सरसारसेति व्यञ्जनयुग्मावृत्त्या छेकानुप्रासः, अन्यत्र वृत्त्यनुप्रासः तयोः पूर्वोक्तोत्प्रेक्षयोश्च संसृष्टिः ॥ ११३ ॥

**रूपमिति** ॥ वयं जनाननेभ्यः अस्याः सम्बन्धि यद्रूपं सौन्दर्यमाकर्ण्य स स चासौ दिगन्तश्च वीप्सायां द्विर्भावः । तस्मादागमाम आगताः स्मः, गमेर्लुङि च्लेरङादेशः। तद्रूपमस्मादनुभूयमानात् सौन्दर्यसारात्, पञ्चमी विभक्त इति पञ्चमी । बहुना भूम्ना प्रथिम्ना, भावप्रधानो निर्देशः । कनीयोऽल्पीयः, "युवाल्पयोः कनन्यतरस्याम्" इति विकल्पात्कनादेशः ॥ ११४ ॥

**रसस्येति** ॥ शृङ्गार इति श्रुतस्य प्रसिद्धस्य रसस्य शृङ्गाररसस्येत्यर्थः । तस्य सम्बन्धी महानुदन्वानुदधिः, उदन्वानुदधिश्चेति निपातनात्साधुः । क्व नाम जागर्ति कुत्रापि किल प्रकाशत इति विकल्पः सर्वदा क्वचिदस्त्येवेत्युत्प्रेक्षा । कुतः अन्यथा शृङ्गारार्णवाभावे लावण्यवैदग्ध्ययोः सौन्दर्यप्रावीण्ययोर्निधिरियं पुरोवर्तिनी श्रीर्लक्ष्मीः कस्मात्पयोधेरुदस्थात् पयोध्यन्तरस्य तस्याः श्रिय इवास्याः श्रियो जनने सामर्थ्याभावादिति भावः । अत्रेयं श्रीरिति विषयनिगरणेन विषयिमात्रनिबन्धनाद्भेदेऽप्यभेदरूपातिशयोक्तिरेतन्मूला च पूर्वोक्तशृङ्गारसागरसद्भावोत्प्रेक्षेत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ ११५ ॥

भैमीमुखे द्युमुखे च चन्द्रव्यवहारं दृष्ट्वा तस्य चन्द्रस्यैकत्वप्रसिद्धिविरोधात् तथा भैमीभ्रुवोः पुष्पे चानङ्गचापव्यवहारस्य पुष्पचापप्रसिद्धिविरोधाच्च गौणमुख्यभावेन तत्समाधित्सया भैमीमुख एव मुख्यत्वमुत्प्रेक्षते—**साक्षादिति** ॥

लक्ष्ये धृतं कुण्डलिके सुदत्या ताटङ्कयुग्मं स्मरधन्विने किम् ।
सव्यापसव्यं विशिखा विसृष्टास्तेनैतयोर्यान्ति किमन्तरेण ॥११७

तनोत्यकीर्तिं कुसुमायुधस्य सैषा बतेन्दीवरकर्णपूरौ ।
यतः श्रवःकुण्डलिकापराद्धशरं खलः ख्यापयिता तमाभ्याम् ॥

---

भैम्या मुखमेव साक्षात्सुधांशुः मुख्यचन्द्रो दिवोऽन्तरिक्षस्य मुखन्तु लाक्षणिको लक्षणागम्यो लाञ्छनिकश्च शैषिकष्ठक् । शशाङ्कश्चन्द्रः शशाङ्कत्वादेव लाक्षणिकत्वमिति भावः । स्फुटमित्युत्प्रेक्षा । तथा एतस्या भ्रुवावेव मुखमिव मुख्यं प्रधानमभिधेयमित्यर्थः । अमोघत्वादिति भावः । शाखादिभ्यो य इति इवार्थे यप्रत्ययः । मुखे भवं च, शरीरावयवाद्यत् । अनङ्गचापं पुष्पं पुनः पुष्पन्तु तस्य मुखस्य भ्रूचापस्य गुण उद्दीपकत्वादिस्तन्मात्रवृत्त्या तत्सादृश्यादित्यर्थः । ज्यामात्रयोगेन च 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुखतन्तुषु' इति वैजयन्ती । अत्रापि स्फुटमित्यनुषङ्गादुत्प्रेक्षेति द्वयोर्निरपेक्षत्वात् संसृष्टिः ॥ ११६ ॥

**लक्ष्येति** ॥ सुदत्या भैम्या ताटङ्कयोः कर्णवेष्टनयोर्युग्मं स्मर एव धन्वी व्रीह्यादित्वादिनिः । तस्मै तादर्थ्ये चतुर्थी । लक्ष्ये शरव्यभूते कुण्डलावेव कुण्डलिके चक्रे सती धृतं किम् । ताटङ्कयुग्ममेव शरव्यचक्रत्वेन धृतवती किमित्युत्प्रेक्षा । अत एव तेन स्मरधन्विनां सव्यमपसव्यञ्च यथा तथा विसृष्टा विमुक्ता विशिखा बाणास्तयोः शरव्यचक्रयोरन्तरेणैव यान्ति प्रसरन्ति किमित्युत्प्रेक्षा । तस्याः पूर्वोत्प्रेक्षासापेक्षत्वात् सङ्करः । सव्यसाचिनो धानुष्काः शरव्यद्वये शरान् मुञ्चन्तीति भावः ॥ ११७ ॥

**तनोतीति** ॥ सैषा भैमी इन्दीवरकर्णपूरावेव कुसुमाशुगस्याकीर्तिमपकीर्तिं तनोति ताभ्यां तस्याकीर्तिं जनयतीत्यर्थः । आयुर्घृतमितिवत्कार्यकारणयोरभेदोपचारः कारणेन्दीवरगुणादकीर्तिश्च कालिमेति भावः । बतेति खेदे । कुतस्तयोस्तत्कारणत्वं तदाह—यतः खलः कश्चिद्दोषान्वेषी दुर्जन आभ्यामिन्दीवरकर्णपूराभ्यां इमावेव निदर्श्येत्यर्थः । ल्यब्लोपे पञ्चमी । तं कुसुमशरं

रजःपदं षट्पदकीटजुष्टं हित्वात्मनः पुष्पमयं पुराणम् ।
अद्यात्मभूराद्रियतां स भैम्या भ्रूयुग्ममन्तर्धृतमुष्टि चापम् ॥११९

पद्मान् हिमे प्रावृषि खञ्जरीटान् क्षिप्नुर्यमादाय विधिः कचित्तान् ।
सारेण तेन प्रतिवर्षमुच्चैः पुष्णाति दृष्टिद्वयमेतदीयम् ॥ १२० ॥

एतद्दृशोरम्बुरुहैर्विशेषं भृङ्गौ जनः पृच्छतु तद्गुणज्ञौ ।
इतीव धात्रा कृततारकालिस्त्रीपुंसमाध्यस्थ्यमिवाक्षियुग्मे ॥१२१॥

---

श्रवसोः कर्णयोः कुण्डलिके ताटङ्कौ ते कुण्डलिके लक्ष्ये चक्रे ताभ्यामपराद्धशरं च्युतसायकं, 'अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः' इत्यमरः । ख्यापयिता ख्यापयिष्यति कर्तरि लुट् । इन्दीवरयोरपि कामशरत्वात् कुण्डलिकाबहिर्भागे लग्नत्वाच्च दृष्टान्तेनैवास्यापराद्धपृषत्कत्वदोषोद्घाटनसौकर्यात्तयोरकीर्तिकारणत्वोत्प्रेक्षेत्यर्थः ॥ ११८ ॥

**रज इति ॥** अथ स आत्मभूः कामः रजसां पदं स्थानं धूलीधूसरमित्यर्थः । षट्पदैरेव कीटैः क्रिमिभिः जुष्टं सेवितं दृष्टमित्यर्थः । पुराणं जीर्णं पुष्पमयमात्मनश्चापं हित्वा त्यक्त्वान्तर्मध्ये धृतमुष्टि मुष्टिपिहितत्वाददृश्यमध्यमित्यर्थः । भैम्या भ्रूयुग्ममेव चापमाद्रियताम् अङ्गीकरोतु अमोघत्वादिति भावः॥

**पद्मानिति ॥** विधिः स्रष्टा यं स्तरं पद्मखञ्जरीटगतं मृष्टांशमादाय तान्निःसारान् पद्मान् हिमे हेमन्तर्तौ खञ्जरीटान् खञ्जनपक्षिणः प्रावृषि वर्षर्तौ कचित् क्वापि क्षिप्नुः क्षेप्ता क्षिप्तवानित्यर्थः । त्रसिगृधीत्यादिना क्नुप्रत्ययः न लोकेत्यादिना षष्ठीप्रतिषेधात् द्वितीया । तेन सारेण प्रतिवर्षं प्रतिवत्सरमेतदीयं दृष्टिद्वयं उच्चैः पुष्णातीत्युत्प्रेक्षा । अन्यथा कथमीदृशी शोभेति भावः ॥

**एतदिति ॥** जन उभयतारतम्यजिज्ञासुः लोक एतद्दृशोर्भैमीदृष्ट्योरम्बुरुहैः सह विशेषं तारतम्यं तद्गुणज्ञावम्बुरुहरसज्ञौ भृङ्गौ भृङ्गी च भृङ्गश्च भृङ्गौ पृच्छतु, पृच्छेर्दुहादित्वाद्द्विकर्मकत्वम् । इतीव इति मत्वेव धात्रा इहै-

व्यधत्त सौधौ रतिकामयोस्तद्भक्तं वयोऽस्या हृदि वासभाजोः ।
तदग्रजाग्रत्पृथुशातकुम्भकुम्भौ न सम्भावयति स्तनौ कः ॥ १२२

अस्याभुजाभ्यां विजिताद्बिसात्किं पृथक्करोऽगृह्यत तत्प्रसूनम् ।
इहेक्ष्यते तन्न गृहः श्रियः कैर्न गीयते वा कर एव लोकैः ॥१२३

छद्मैव तच्छम्बरजं बिसिन्यास्तत्पद्ममस्यास्तु भुजाग्रसद्म ।
उत्कण्टकादुद्गमनेन नालादुत्कण्टकं शातशिखैर्नखैर्यत् ॥ १२४ ॥

---

तदीयेऽक्षियुग्मे तारके कनीनिके एव अलि स्त्रीपुंसावलिदम्पती, अचतुरादिना समासान्तनिपातः । तयोर्माध्यस्थ्यं कूटसाक्षित्वमक्षिमध्यवर्तित्वं चाकृत कृतवान् करोतेः कर्तरि लुङि तङि, "ह्रस्वादङ्गात्" इति सकारलोपः । विवादपदतत्वज्ञो मध्यस्थश्च साक्षीति भावः । भैमीदृगम्बुरुहतारतम्यकथनाय धात्रा स्थापितमलिमिथुनमिव भाति कनीनिकायुग्ममित्युत्प्रेक्षा ॥ १२१ ॥

**व्यधत्तेति** ॥ अस्या भैम्या हृदि वासभाजोर्निवसतो रतिकामयोः तयोः रतिकामयोर्भक्तं विधेयं वयो यौवनं (कर्तृ) सौधौ व्यधत्त निर्ममे अन्यथा तयोस्तत्र निवासायोगादिति भावः । अत एव कोऽस्याः स्तनौ तयोः सौधयोरग्रे जाग्रतौ प्रकाशमानौ पृथू च शातकुम्भकुम्भौ कनककलशौ न सम्भावयति न वितर्कयति सर्वोऽप्येवमुत्प्रेक्षत एवेत्यर्थः ॥ १२२ ॥

**अस्या इति** ॥ अस्या भैम्या भुजाभ्यां विजेतृभ्यां विजिताद्बिसात् मृणालात् पृथगेकैकेनैव तत्प्रसूनं बिसप्रसूनं पद्ममेव करो बलिर्हस्तश्च अगृह्यत गृहीतं किमित्युत्प्रेक्षा । 'बलिहस्तांशवः करा' इत्यमरः । जेतुर्जितात्करग्रहणमेतत्करस्य पद्मत्वं चोचितमिति भावः । तथा हि इहास्या भुजयोस्तत्करत्वेन गृहीतं पद्मं कैर्लोकैर्जनैः श्रियो लक्ष्म्याः शोभाया गृहश्चालयो नेक्ष्यते कर एव कर इत्येव स गीतेय नोच्यते वा, सर्वैरपि तथा क्रियत इत्यर्थः । एतद्धस्तस्य स्त्रीगृहत्वात्पद्मत्वं करत्वप्रसिद्धेर्बिसात्करत्वेन ग्रहणं च सिद्धमित्युत्प्रेक्षा युक्तेत्यर्थः ॥

**छद्मैवेति** ॥ बिसिन्याः पद्मिन्याः सम्बन्धि यत्पद्मं तत् शम्बरजमब्जन्यमथ च शम्बरासुरमायाजन्यं छद्मैव मायैव, न तु पारमार्थिकमित्यर्थः ।

जागर्ति मर्त्येषु तुलार्थमस्या योग्येति योग्यानुपलम्भनं नः ।
यद्यस्ति नाके भुवनेऽथवाधस्तदा न कौतस्कुतलोकबाधः ॥ १२५

नमः करेभ्योऽस्तु विधेर्न वास्तु स्पृष्टं धियाप्यस्य न किं पुनस्तैः ।
स्पर्शादिदं स्याल्लुलितं हि शिल्पं मनोभुवोऽनङ्गतयानुरूपम् ॥

'दैत्ये नाशम्बरोऽम्बुनि' इति वैजयन्ती । अस्या भैम्या भुजाग्रं सद्म स्थानं यस्य तत्, यत्तु पद्मं पारमार्थिकं पद्ममित्यर्थः । कुतः—यद्यस्मादुद्गताः कण्टकाः सूचयः पुलकाश्च यस्य तस्मान्नलात् भुजान्नालदण्डाच्चोद्गमनेन हेतुना शातशिखैः तीक्ष्णाग्रैः नखैः नखच्छलेनेत्यर्थः । उत्कण्टकम्, बिसिनीपद्मं तु नोत्कण्टकं, कारणगुणानुविधायित्वात् कार्यस्येति भावः । भैमीपाणिपद्मस्य प्रसिद्धपद्मव्यतिरेकोक्त्या व्यतिरेकालङ्कारः ॥ १२४ ॥

**जागर्तीति** ॥ अस्या भैम्यास्तुलायै तुलार्थम् औपम्याय योग्यार्हा काचिन्मर्त्येष्वस्तीत्यत्र नोऽस्माकं योग्यानुपलम्भनं योग्यानुपलब्धिरेव बाधक प्रमाणं जागर्ति विलसति अथ नाके स्वर्गेऽधोभुवने पाताले वास्ति यदि तर्हि कौतस्कुतानां ततस्ततः स्वर्गादिलोकादागतानां तत आगत इत्यण् प्रत्ययः । अव्ययानां भमात्रे टिलोपः । लोकानां बाधः सम्बाधो न स्यात् तत्त्वा नागच्छेयुरित्यर्थः । अहो एवमनुपलब्ध्यर्थापत्तिभ्यामस्यास्त्रिलोक्यामपि तुला-भावो निश्चित इत्यर्थः । अत एवोपमानलोपाल्लुप्तोपमालङ्कारः ॥ १२५ ॥

**नम इति** ॥ विधेः स्रष्टुः करेभ्यो हस्तेभ्यो नमो नमस्कारोऽस्तु यैरिदं शिल्पमकल्पीति भावः । नमः स्वस्तीत्यादिना चतुर्थी । अथ नमो नास्तु वा कुतः अस्य विधेः धिया मनसापि न स्पृष्टन्तैः करैः किं पुनः हि यस्मात् स्पर्शात्करस्पर्शादिदं शिल्पं विलुलितं तत्र तत्र प्रमृष्टं स्यात् । किन्तु अनङ्गतया मनोभुवः कामस्यानुरूपं युक्तम् । अस्पृष्ट्वैव निर्माणासम्भवात्त्रैलोक्यविजयिन-स्तस्यानङ्गत्वेऽपि निर्माणशक्तिसम्भवाच्चेति भावः । अत्र भैमीशिल्पस्य विधि-करसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिस्तत्सापेक्षा चेयमनङ्गस्रष्टित्वोत्प्रेक्षेति सङ्करः ॥ १२६ ॥

इमां न मृद्वीमसृजत् कराभ्यां वेधाः कुशाध्यासनकर्कशाभ्याम् ।
शृङ्गारधारां मनसा न शान्तिविश्रान्तिधन्वाध्वमहीरुहेण ॥ १२७

उल्लास्य धातुस्तुलिता करेण श्रोण्यौ किमेषा स्तनयोर्गुरुर्वा ।
तेनान्तरालैस्त्रिभिरङ्गुलीनामुदीतमध्यत्रिवलीविलासा ॥ १२८ ॥

निजामृतोद्यन्नवनीतजाङ्गीमेतां क्रमोन्मीलितपीतिमानम् ।
कृत्वेन्दुरस्या मुखमात्मनाभून्निद्रालुना दुर्घटमम्बुजेन ॥ १२९ ॥

---

इतोऽपि हेतोर्न वैधसीसृष्टिरियमित्याह—**इमामिति** ॥ वेधाः स्रष्टा मृद्वीं कोमलाङ्गीमिमां कुशाध्यासनेन कुशाक्रमणेन कर्कशाभ्यां कराभ्यां नासृजदयोग्यत्वादिति भावः । तथा शृङ्गारधारां शृङ्गाररसवाहिनीमिमाम् । शान्तेः विषयविरतेः विश्रान्त्यै धन्वाध्वमहीरुहो मरुमार्गवृक्षः तेन विरक्तेन विषयरसानभिज्ञेन मनसापि नासृजत्स्वयमशृङ्गारिणः शृङ्गारिणीसृष्ट्यशक्तेरिति भावः । अत्र विधिकरमनःसम्वन्धाभावेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरसंसृष्टिः ॥ १२७

**उल्लास्येति** ॥ एषा भैमी श्रोण्योर्गुरुर्गुर्वी, "वोतो गुणवचनात्" इति विकल्पादनीकारः कुचयोर्वेति संशय्येति शेषः । इतिनैव गम्यमानार्थत्वादप्रयोगः । धातुः करेणोत्तानपाणिना उल्लास्य नीवीमुदरे गृहीत्वा उन्नमय्येत्यर्थः । तुलिता समं धारिता किमित्युत्प्रेक्षा । तेन तुलनेनाङ्गुलीनां चतसृणां त्रिभिरन्तरालैरुदीत उद्गतः, ईङ् गताविति धातोः कर्तरि क्तः । मध्ये त्रिवलीविलासो वलित्रयशोभा यस्याः सा जाता अतो नूनं तुलितेत्यर्थः ॥ १२८ ॥

**निजेति** ॥ इन्दुर्निजमात्मीयममृतं पीयूषं क्षीरदध्यादिगोरसश्च । 'अमृतं व्योम्नि देवान्ने मोक्षे हेम्नि च गोरस' इति वैजयन्ती । तस्मादुद्यदुत्पद्यमानं नवनीतं दधिसारः, 'दधिसारो नवनीतम्' इति हलायुधः । तज्जमङ्गं यस्यास्तामत एव क्रमोन्मीलितपीतिमानं नवनीतवदेव क्रमाविर्भूतपीतवर्णामेतां भैमीं कृत्वा निर्माय निद्रालुना निमीलनशीलेनाम्बुजेन दुर्घटं दुस्साधमस्या मुखमात्मनाभूत् स्वयमेवाभूदित्युत्प्रेक्षा । अन्यथा कथमीदृग्लावण्यसम्पत्तिरिति भावः ॥

अस्याः स चारुर्मधुरेव कारुः श्वासं वितेने मलयानिलेन ।
अमूनि पुष्पैर्विदधेऽङ्गकानि चकार वाचं पिकपञ्चमेन ॥ १३० ॥

कृतिः स्मरस्यैव न धातुरेषा नास्याहि शिल्पीतरकारुजेयः ।
रूपस्य शिल्पे वयसा च वेधा निर्जीयते स स्मरकिङ्करेण ॥ १३१

गुरोरपीमां भणदोष्ठकण्ठनिरुक्तिगर्वच्छिदया विनेतुः ।
श्रमः स्मरस्यैष भवं विहाय मुक्तिं गतानामनुतापनाय ॥ १३२ ॥

---

**अस्या इति** ॥ चारुश्चतुरः सः प्रसिद्धो मधुर्वसन्त एव कारुः शिल्पी मलयानिलेनोपादानेनास्याः श्वासं निश्वासमारुतं वितेने चकार । पुष्पैरमूनीति हस्तनिर्देशः । अङ्गकान्यङ्गानि विदधे वाचं पिकपञ्चमेन कोकिलस्वरेण पिकः कूजति पञ्चममिति वचनात् । चकार ससर्ज इत्युत्प्रेक्षा अन्यथा कथमेषामीदृशानि सौरभमार्दवमाधुर्याणीति भावः ॥ १३० ॥

**कृतिरिति** ॥ एषा भैमी स्मरस्यैव कृतिः सृष्टिर्धातुः कृतिर्न । कुतः हि यस्मादस्या भैम्याः शिल्पी निर्माता इतरकारुभिः शिल्प्यन्तरैर्जेयोजय्यो न, अपराजितेन भवितव्यमित्यर्थः । ब्रह्मा तु पराजित इत्याह—रूपस्य शिल्पे रूपनिर्माणविद्यायां वेधाः स्मरकिङ्करेण वयसा यौवनेनापि निर्जीयते ब्रह्मसृष्टेरपि यौवनसृष्टेरधिकरमणीयत्वादित्यर्थः । अतस्तत्स्वाम्यादसौ स्मरेण जित इति किमु वक्तव्यमिति युक्ता स्मरकृतिरेषेत्युत्प्रेक्षा स्वभावरमणीयं तद्रूपं यौवनमदनाभ्यां जगन्मोहनं जातमिति तात्पर्यम् ॥ १३१ ॥

**गुरोरिति** ॥ इमां भैमीं भणत् वर्णयत् गुरोर्बृहस्पतेरथोष्ठकण्ठमोष्ठौ कण्ठश्च, प्राण्यङ्गत्वादेकवद्भावः । "न लोक" इत्यादिना षष्ठीप्रतिषेधात्कर्मणि द्वितीया । तस्य निरुक्तिगर्वच्छिदया वक्तृत्वाहङ्कारखण्डनेन षिद्भिदादिभ्योऽङ् । विनेतुः शिक्षयितुः ताच्छील्ये तृन्प्रत्ययः । निर्वक्तुमशक्यरूपनिर्माणमेवास्य शिक्षेति भावः । स्मरस्यैष श्रम ईदृग्रूपनिर्माणप्रयासो भवसंसारबन्धं विहाय मुक्त्या मुक्तिंगतानामनुतापनाय वृथा मुक्ताः स्म इति पश्चात्तापजननाय भवती-

आख्यातुमक्षिव्रजसर्वपीतां भैमीं तदेकाङ्गनिखातदृक्षु ।
गाथासुधाश्लेषकलाविलासैरलञ्चकाराननचन्द्रमिन्द्रः ॥ १३३ ॥

स्मितेन गौरी हरिणी दृशेयं वीणावती सुस्वरकण्ठभासा ।
हेमैव कायप्रभयाङ्गशेषैस्तन्वी मतिं क्रामति मेनकापि ॥ १३४ ॥

---

त्युत्प्रेक्षा तया किमुतान्येषामित्यर्थापत्तिर्व्यज्यते । दमयन्तीवन्धरहितां मुक्तिं धिगिति भावः ॥ १३२ ॥

**आख्यातुमिति** ॥ अथेन्द्रो नलरूपधार्यपि निजशक्त्याक्ष्णां व्रजेन सहस्रेणाक्षिभिः सर्वेष्वङ्गेषु पीतामादरदृष्टां भैमीं तस्या भैम्या एकस्मिन्नेवाङ्गे निखाते प्रवेशिते दृशौ येषां तेषु द्विनेत्रेषु विषये आख्यातुं तेभ्यः कथयितुं सर्वविशेषज्ञो हि किञ्चिदज्ञं बोधयतीति भावः । गाथासुधायाः श्लोकामृतस्य श्लेषकलायाः श्लेषालङ्कारविद्यायाः विलासैरन्यत्रामृतसम्पर्केण षोडशभागविलासैश्च आननमेव चन्द्रः तमलञ्चकार । श्लिष्टार्थेन श्लोकेनाकथयदित्यर्थः ॥ १३३ ॥

तमेव श्लोकमाह—**स्मितेनेति** ॥ इयं भैमी स्मितेन गौरी गौरीसंज्ञा काचिद्देवाङ्गना सिता च 'गौरोऽरुणे सिते पीते' इति वैजयन्ती । दृशा दृक्शोभया हरिणी काचिद्देवाङ्गना कुरङ्गी च सुस्वरकण्ठभासा सुमधुरकण्ठध्वनिसम्पत्त्या वीणावती अप्सरोविशेषो वीणायुक्ता च, तत्सदृकण्ठेत्यर्थः । कायप्रभया अङ्गकान्त्या हेमा काचिद्देवाङ्गनैव, अन्यत्र हेम सुवर्णमेव अङ्गेषु शेषैरवशिष्टाङ्गैः कापि तन्वी उपमानार्हा स्त्री मे मतिं न क्रामति बुद्धिं नारोहति, तथा तन्वी मेनकाऽपि मतिं क्रामति । एवं मर्त्यामर्त्योचितार्थद्वयमाश्रित्यावादीदित्यर्थः । अत्र एकस्या भैम्या गौरीत्यादिरूपेणानेकधोल्लेखनादुल्लेखालङ्कारः । नानाधर्मवलादेकं यदि नानैव गृह्यते । नानारूपसमुल्लेखात् स उल्लेखं इति स्मृतः इति लक्षणात् । स च श्लेषप्रतिभोत्थापित इति सङ्करः । एतावतैव कविनापि श्लेषकलाविलासैरित्युक्तम् । अस्य च गृहीतृभेदात् कारकभेदाच्चोत्थानादत्र स्मितादिकारणकारकभेदादुत्थानमिति सङ्क्षेपः ॥ १३४ ॥

इति स्तुवानः सविधे नलेन विलोकितः शङ्कितमानसेन ।
व्याकृत्य मर्त्योचितमर्थमुक्तेराखण्डलस्तस्य नुनोद शङ्काम् ॥१३५

स्वं नैषधादेशमधोविधाय कार्यस्य हेतोरपि नानलः सन् ।
किं स्थानिवद्भावमधत्त दुष्टं तादृक्कृतव्याकरणः पुनः सः ॥१३६॥

---

**इतीति** ॥ इति स्तुवान आखण्डलः सविधे समीपे शङ्कितमानसेनामर्त्योचितार्थोपन्यासचकितचित्तेन नलेन विलोकितः सन् उक्तेः स्मितेनेत्यादिवाक्यस्य मर्त्योचितमर्थं गौरीत्यादिशब्दानां सितत्वादिरूपं व्याकृत्य व्याख्याय तस्य नलस्य शङ्कां नुनोद अपनीतवानित्यर्थः ॥ १३५ ॥

अत्र कविराह—**स्वमिति** ॥ स इन्द्रः स्वं स्वकीयं नैषधस्य नलस्यादेशन्तदुक्तं दमयन्तीपरिहारवाक्यमेवाधोविधायावधीर्याहो इति पाठे नैषधादेशं दमयन्तीं प्रति नलप्रेषणं विधाय तद्वैफल्ये पुनः कार्यस्य हेतोर्दमयन्तीप्राप्तिकारणात् । षष्ठी हेतुप्रयोगे । नलो न भवतीत्यनलः, नञ्समासः । अनलो न भवतीति नानलो न-समासः। नल इत्यर्थः । सोऽपि सन्नलरूपधारी च सन्नित्यर्थः । पुनः पश्चात्तादृक् तथाकृतं व्याकरणं रागपारवश्योक्तस्यान्यथाविवरणं येन सोऽपि सन् प्रलपन्नित्यर्थः । स्थानी प्रसक्तिमान् तद्वत् किं किमर्थं दुष्टं पापिष्ठभावं परस्त्रीवाञ्छामधत्त । अहो महेन्द्रस्यापि दुर्व्यसनितेत्याश्चर्यम् । अन्यच्च तादृक्कृतव्याकरणो महेन्द्रव्याकरणकर्तापि इन्द्रो नैषधादेशं विधाय तद्रूपधारणेन तदादेशो भूत्वा न अल् अनल् न अनल् नानल् पूर्ववत्ससासः । अलित्यर्थः तस्यालः कार्यार्थं किमिति दुष्टमनल्विधाविति निषेधादयुक्तं स्थानिवद्भावमधत्त । अहो विरुद्धमित्यर्थः । अन्यच्च तादृक्कृतव्याकरणस्तथा कृतसंस्कारः स इत्ययंशब्दः स्वं स्वकीयमादेशं विधायेति खण्डश्लेषः त्यदाद्यत्वं प्राप्येत्यर्थः । नानलः कार्यस्य हेतोरलाश्रितहल्ङ्यादिलोपलक्षणस्थानिकार्यार्थं किमिति दुष्टमल्विधाविति प्रतिषेधादनुपपन्नं स्थानिवद्भावमधत्त अहो विरुद्धमित्यर्थः । अत्रोक्तस्य विरोधस्य प्राथमिकार्थेनैव समाधानाद्विरोधाभासोऽलङ्कारः। स च श्लेषप्रतिभोत्थापित इति सङ्करः । तृतीयार्थे स इति विशेष्यस्यापि

इयमियमधिरथ्यं याति नेपथ्यमञ्जु-
र्विशति विशति वेदीमुर्वशी सेयमुर्व्याः ।
इति जनजनितैः सानन्दनादैर्विजघ्ने
नलहृदि परभैमीवर्णनाकर्णनाप्तिः ॥ १३७ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
तर्केष्वप्यसमश्रमस्य दशमस्तस्य व्यरंसीन्महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥

---

सिद्धत्वात् व्यङ्ग्यं सदपि वाच्यस्य विरोधाभासस्यैव साधकत्वाद्वाच्यसिद्ध्यङ्ग-मित्यनुसन्धेयम् ॥ १३६ ॥

**इयमियमिति** ॥ नेपथ्येन प्रसाधनेन मञ्जुर्मनोज्ञा उर्व्यां ऊर्वशी भूतलोर्वशी सेयं दमयन्तीयमियमिति पुरोवर्तित्वान्निर्देशः, सम्भ्रमे द्विरुक्तिः । अधिरथ्यं रथ्यायां विभक्त्यर्थेऽव्ययीभावः । याति यथ्यायां गच्छतीत्यर्थः । वेदिं स्वयम्वरवेदिकां विशति विशति पूर्ववद्द्विरुक्तिः । इत्येवं जनैरालोकजनै-र्जनितैः सानन्दनादैः सन्तोषघोषैः कर्तृभिः सा प्रस्तुता नलहृदि परेषां समीपस्थ-जनानां भैमीवर्णनस्याकर्णनाप्तिः श्रवणसुखलाभो विजघ्ने विहतः। मालिनीवृत्तम् ॥

**श्रीहर्षमिति** ॥ **तर्केष्वपीति** ॥ न केवलं कवितायामेवेत्यर्थः । गतमन्यत् ॥ १३८ ॥

इति पदवाक्यप्रमाणपारावारपारीणश्रीमहामहोपाध्यायकोलाचल-
मल्लिनाथसूरिविरचिते नैषधव्याख्याने जीवातुसमाख्याने
दशमः सर्गः समाप्तः ।

# एकादशः सर्गः ।

तां देवतामिव मुखेन्दुलसत्प्रसादा-

मक्ष्णा रसादनिमिषेण निभालयन्तीम् ।

लाभाय चेतसि धृतस्य वरस्य भीम-

भूमीन्द्रजा तदनु राजसभां बभाज ॥ १ ॥

तन्निर्मलावयवभित्तिषु तद्विभूषा-

रत्नेषु च प्रतिफलन्निजदेहदम्भात् ।

---

**तामिति** ॥ तदनु तस्मादानन्दनादोत्थानादनन्तरमित्यर्थः । अनु-शब्दस्य लक्षणार्थे कर्मप्रवचनीयत्वात् तद्योगे द्वितीया । भीमभूमीन्द्रजा भैमी, मुखेन्दुषु मुखेन्दौ च लसन् प्रसादः प्रसक्तिरनुग्रहश्च यस्यास्तां, 'प्रसादोऽनुग्रहे काव्यप्राणस्वास्थ्यप्रसक्तिषु' इति विश्वः । रसाद्रागादनिमिषेण अक्ष्णा चक्षुषा निभालयन्तीं ईक्षमाणां, 'दर्शनेक्षणनिध्याननिर्वर्णननिभालनम्' इति वैजयन्ती । भल आमण्डने इति धातोश्चौरादिकाच्छतरि ङीप् । यद्यपि प्रायेणायं धातुरात्मने-पदी, यदाह भट्टमल्लः, निभालयत ईक्षत इति तथाप्यस्य भूवादिष्वपि पाठा-दुभयत्र पठिता उभयपदिन इति मतमाश्रित्यायं परस्मैपदप्रयोग इति द्रष्टव्यम् । तां राजसभां, सभाराजामनुष्यपूर्वेत्यत्र पर्यायाणामेवेष्यत इति नियमात्सभाया अनपुंसकत्वम् । देवतामिव चेतसि धृतस्य चिन्तितस्य वरस्य वोढुर्देवदेयार्थस्य च । 'वरो ना रूपजामात्रोर्देवादेरीप्सिते वृतौ' इति वैजयन्ती । लाभाय बभाज प्राप सिषेवे च । अस्मिन् सर्गे वसन्ततिलकावृत्तम् लक्षणमुक्तम् ॥ १ ॥

**तदिति** ॥ तैर्युवभिः सुतनौ दमयन्त्यां दृष्ट्या परं दृष्ट्यैव न ममज्जे न मग्नम् । भावे लिट् । हृदयेन केवलं हृदयेनैवापि न ममज्जे, किन्तु निर्मलासु

दृष्ट्या परं न हृदयेन न केवलं तैः
सर्वात्मनैव सुतनौ युवभिर्ममज्जे ॥ २ ॥

द्यामन्तरा वसुमतीमपि गाधिजन्मा
यद्यन्यमेव निरमास्यत नाकलोकम् ।
चारुः स यादृगभविष्यदभूद्विमानै-
स्तादृक् तदभ्रमवलोकितुमागतानाम् ॥ ३ ॥

कुर्वद्भिरात्मभवसौरभसम्प्रदानं
भूपालचक्रचलचामरमारुतौघम् ।
आलोकनाय दिवि सञ्चरतां सुराणां
तत्रार्चनाविधिरभूदधिवासधूपैः ॥ ४ ॥

---

अवयवभित्तिषु गण्डस्थलादिषु तस्या विभूषारत्नेषु च प्रतिफलतां निजानां देहानां दम्भात् तत्क्षणप्रतिफलितशरीरव्याजात्, 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे' इत्यमरः । सर्वात्मना सर्वाङ्गेनैव ममज्जे दृष्टमनोमज्जनन्तावदास्तां, किन्तु प्रतिबिम्बव्याजेन सर्वाङ्गमज्जनं जातमिति सापह्नवोत्प्रेक्षा ॥ २ ॥

**द्यामिति** ॥ गाधेर्जन्म यस्य स गाधिजन्मा विश्वामित्रः, 'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपद' इति वामनः । द्यां वसुमतीमप्यन्तरा स्वर्गभूम्योरन्तराले "अन्तरान्तरेण युक्ते" इति द्वितीया । अन्यमेव नाकलोकं स्वर्गान्तरं निरमास्यत यदि निर्मिमीत चेत् माङः क्रियातिपत्तौ लृङ् । स नाकलोको यादृक् चारुरभविष्यत्, भवेत् पूर्ववल्लृङ् । तदभ्रमन्तरिक्षं (कर्तृ) स्वयम्वरमवलोकितुमागतानां देवानां विमानैस्तादृक् तथा चारु सुन्दरं अभूत् । अत्राभ्रस्यान्तराले नाकलोकासम्बन्धेऽपि सम्भावनया तत्सम्बन्धोक्तेरतिशयोक्तिभेदः । अभूतोपमेति केचित् ॥ ३ ॥

**कुर्वद्भिरिति** ॥ भूपालचक्रस्य राजलोकस्य चलानाञ्चलताञ्चामराणां मारुतस्यौघं प्रवाहमात्मभवसौरभस्य स्वजन्यगन्धस्य सम्प्रदानं सम्प्रदानकारकं

तत्रावनीन्द्रचयचन्दनचन्द्रलेप-
नेपथ्यगन्धमयगन्धवहप्रवाहम् ।
आलीभिरापतदनङ्गशरानुसारी
संरुध्य सौरभमगाहत भृङ्गवर्गः ॥ ५ ॥

उत्तुङ्गमङ्गलमृदङ्गनिनादभङ्गी-
सर्वानुवादविधिबोधितसाधुमेधाः ।
सौधस्रजः प्लुतपताकतयाभिनिन्यु-
र्मन्ये जनेषु निजताण्डवपण्डितत्वम् ॥ ६ ॥

---

कुर्वद्भिः स्वसौरभं तत्र सङ्क्रामयद्भिरित्यर्थः । अधिवासधूपैर्वासधूपैरालोकनाय स्वयम्वरदर्शनाय दिव्याकाशे सञ्चरतां सुराणां तत्र स्वयम्वरे अर्चनाविधिः पूजाकृत्यमभूत् । अत्राधिवासधूपस्य सुरासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्ति-भेदः ॥ ४ ॥

**तत्रेति** ॥ तत्र स्वयम्वरे आलीभिः श्रेणीभिः श्रेणीसम्बन्धात् आपतत आगच्छतोऽनङ्गशराननुसरतीति तदनुसारी तत्सदृशो भृङ्गवर्गः अवनीन्द्रचयस्य राजलोकस्य चन्दनं चन्द्रः कर्पूरश्च । 'अथ कर्पूरमस्त्रियाम्, घनसारश्चन्द्रसंज्ञः' इत्यमरः । तयोर्लेपः स एव नेपथ्यमलङ्कारस्तस्य यो गन्धस्तन्मयस्य तत्प्रचुरस्य गन्धवहस्य वायोः प्रवाहं संरुध्य मध्ये मार्गमावृत्य सौरभमामोदमगाहत प्राविशत् ॥ ५ ॥

**उत्तुङ्गेति** ॥ उत्तुङ्गास्तारा ये मङ्गलमृदङ्गनिनादास्तद्भङ्गीनां तत्प्रकाराणां सर्वानुवादविधिना प्रतिध्वनिरूपेण कृत्स्नप्रत्युच्चारणेन बोधिता निवेदिता साधु-मेधा बुद्धिविशेषो यासां तास्तथोक्ताः । 'धीर्धारणवती मेधा' इत्यमरः । परोक्त-सर्वविशेषानुवादस्य मेधाकार्यत्वात् तस्य तल्लिङ्गत्वमिति भावः । सौधस्रजः प्रासादपङ्क्तयः प्लुतपताकतया चलत्पताकतया जनेषु विषये निजताण्डवपण्डितत्वं स्वस्य नाट्यकौशलं, 'ताण्डवं नटनं नाट्यम्' इत्यमरः । अभिनिन्युर्वीजयन्ति

सम्भाषणं भगवती सदृशं विधाय
वाग्देवता विनयबन्धुरकन्धरायाः ।
ऊचे चतुर्दशजगज्जनतानमस्या
तत्राश्रिता सदसि दक्षिणपक्षमस्याः ॥ ७ ॥

अभ्यागमन्मखभुजामिह कोटिरेषा
येषां पृथक्कथनमब्दशतातिपाति ।
अस्यां वृणीष्व मनसा परिभाव्य कश्चि-
द्यं चित्तवृत्तिरनुधावति तावकीना ॥ ८ ॥

---

स मन्ये वाक्यार्थः कर्म । मृदङ्गप्रतिध्वानात्पताकाचलनाच्च वाद्यानुगुणं हस्ता-भिनयञ्चकुरिवेत्युत्प्रेक्षा ॥ ६ ॥

**सम्भाषणमिति** ॥ चतुर्दशानां जगतां समाहारश्चतुर्दशजगत् तत्र जनतानां जनसमूहानां नमस्या नमस्कार्या, नमोवरिव इति क्यचि धातुसंज्ञाया-मचो यत् क्यस्य विभाषेति वयचो लोपः । भगवती वाग्देवता सरस्वती तत्र सदसि विनयेन बन्धुरकन्धराया नम्रग्रीवायाः, 'बन्धुरौ नम्रविषमौ' इति वैजयन्ती। अस्या भैम्या दक्षिणपक्षं दक्षिणपार्श्वं श्रिता आस्थिता पूज्यत्वाद्दक्षिण-पार्श्वस्थिता सती सदृशं तत्कालोचितं सम्भाषणं विधाय आगच्छ वत्से ! पश्ये-त्यादि वाक्यमुक्त्वा ऊचे ॥ ७ ॥

**अभीति** ॥ हे वत्से ! इह स्वयम्वरे मखभुजां देवानां एषा कोटि-रनन्तसङ्ख्या अभ्यागमदभ्यागता येषां पृथक् प्रत्येकमेव कथनम् अब्दानां वत्सराणां शतान्यतिपतति अतिक्रामतीति तथोक्तं तावता कालेनापि वक्तु-मशक्येत्यर्थः । अस्यां सुरकोट्यां मनसा परिभाव्यालोच्य कञ्चित् वृणीष्व । यं सुरं तवेयं तावकीना युष्मदस्मदोरन्यतरस्यां खञ्चेति खञ् । तवकममकावेक-वचन इति तवकादेशः । चित्तवृत्तिरनुधावति अनुयाति तं वृणीष्वेत्यर्थः ॥ ८ ॥

एषां त्वदीक्षणरसादनिमेषतैषा
स्वाभाविकानिमिषतामिलिता यथाभूत् ।
आस्ये तथैव तव नन्वधरोपभोगै-
र्मुग्धे ! विधावमृतपानमपि द्विधास्तु ॥ ९ ॥

एषां गिरेः सकलरत्नफलस्तरुः स
प्राग्दुग्धभूमिसुरभेः खलु पञ्चशाखः ।
मुक्ताफलं फलनसान्वयनाम तन्व-
न्नाभाति विन्दुभिरिव च्छुरितः पयोभिः ॥ १० ॥

---

**एषामिति** ॥ एषां सुराणां त्वदीक्षणे रसाद्रागादेषा अनिमेषता निमेष-राहित्यं यथा स्वाभाविक्यः, "स्त्रियाः पुंवत्" इत्यादिना पुंवद्भावः । न निमिषन्तीत्यनिमिषा इगुपधलक्षणः कः । तेषां भावस्तत्ता तया मिलिता सङ्गता सती द्विधा द्विगुणिताऽभूत् तथैव नन्वाय ! मुग्धे ! सुन्दरि ! विधौ चन्द्रे अमृतपानमपि तवास्ये आस्यचन्द्रे अधरोपभोगैरधरामृतपानैर्मिलितं सत् द्विधास्तु द्विगुणितमस्त्वित्यर्थः । अत्रानिमिषत्वामृतपानयोर्द्वैविध्यासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ९ ॥

**एषामिति** ॥ सकलानि रत्नान्येव फलानि यस्य स सर्वरत्नसूरित्यर्थः । फलनं धारकस्येष्टसम्पादनं, फलनिष्पत्ताविति धातोर्ल्युट् । तेन सान्वयमन्वर्थं नाम यस्य तन्मुक्ताफलं तन्वन् विस्तारयन् तादृङ्मुक्ताफलव्याप्त इत्यर्थः । एषां सुराणां सम्बन्धी स प्रसिद्धस्तरुः कल्पवृक्षः प्राक् पुरा दुग्धा भूमिरेव सुरभिः गौर्गोरूपधरा भूमिर्येन तदुक्तम्—प्रमाणं श्रूयते दुग्धा पुनर्दिव्यै-र्वसुन्धरा । औषधीश्चैव भास्वन्ति रत्नानि विविधानि च ॥ वत्सस्तु हिमवा-नासीत् दोग्धा मेरुर्महागिरिः ॥" इति । तस्य गिरेर्मेरोः सम्बन्धिपयोभिः क्षीररूपैर्बिन्दुभिः च्छुरितो व्याप्तः पञ्चशाखः पाणिरिवाभातीत्युत्प्रेक्षा । पञ्चशाखः

वक्त्रेन्दुसन्निधिनिमीलिदलारविन्द-
द्वन्द्वभ्रमक्षममथाञ्जलिमात्ममौलौ ।
कृत्वापराधभयचञ्चलमीक्षमाणा
सान्यत्र गन्तुममरैः कृपयान्वमानि ॥ ११ ॥

तत्तद्विरागमुदितं शिबिकाधरस्थाः
साक्षाद्विदुः स्म न मनागपि यानधुर्याः ।
आसन्नन्ननायकविषण्णमुखानुमेय-
भैमीविरक्तचरितानुमया नु जज्ञुः ॥ १२ ॥

---

शयः पाणिः' इत्यमरः । दोग्धुः पाणिः दुग्धबिन्दुभिर्दिग्धो भवतीति प्रसिद्धं सुरवरणेन स मेरुस्ते हस्तगामी भवतीति भावः ॥ १० ॥

**वक्त्रेन्द्विति** ॥ अथ वाणीवाक्यानन्तरं वक्त्रेन्दोः सन्निधिना सन्निधानेन निमीलानि सङ्कुचन्ति दलानि ययोस्तयोररविन्दयोः पद्मयोर्द्वन्द्वे भ्रमक्षमं भ्रान्तिजननशक्तम् अञ्जलिमात्ममौलौ स्वमूर्ध्नि कृत्वा अपराधादवरणरूपाद्धेतोर्यद्भयं सुरेभ्यस्तेन चञ्चलं यथा तथा ईक्षमाणा सा भैमी अमरैः कृपया अन्यत्र गन्तुमन्वमानि अनुमता प्रणिपातप्रमाद्या खलु महान्त इति भावः । अत्राञ्जलौ वक्त्रेन्दुसन्निधिसङ्कुचितारविन्दयुगलभ्रान्तिवर्णनाद्रूपकानुप्राणितो भ्रान्तिमदलङ्कार इति सङ्करः । कविसम्मतसादृश्याद्वस्त्वन्तरप्रतिबिम्बनं भ्रान्तिमानिति लक्षणात् ॥

**तत्तदिति** ॥ शिबिकायाश्चतुरस्रयानस्य अधरस्था अधःस्थिता अत एव ते यानस्य धुर्या धूर्वहाः । शिवभागवतवत्समासः धुरो यड्ढकाविति यत्प्रत्ययः । उदितमुत्पन्नं तत्तद्विरागं तस्या भैम्यास्तेषु तेषु नायकेषु विषये विरागमपरागं मनागीषदपि साक्षात्प्रत्यक्षं न विदुः न विदन्ति स्म, "विदो लटो वा" इति झेर्जुसादेशः, लट् स्म इति भूते लट् । किं त्वासन्नानां पुरोवर्तिनां नायकानां विषण्णैरप्रसन्नैर्मुखैरनुमेयानां भैम्या विरक्तचरितानाम् अपरक्तचेष्टितानामनुमयानुमानेन आतश्चोपसर्ग इत्यङ् । अनुजज्ञुः अज्ञासिषुः नायकमुखचेष्टया भैमीवैराग्यमनुमितवन्त इत्यर्थः ॥ १२ ॥

रक्षःस्वरक्षणमवेक्ष्य निजं निवृत्तो
विद्याधरेष्वधरतां वपुषैव भैम्याः ।
गन्धर्वसंसदि न गन्धमपि स्वरस्य
तस्या विमृश्य विमुखोऽजनि यानिवर्गः ॥ १३ ॥

दीनेषु सत्स्वपि कृताफलवित्तरक्षै-
यक्षैरदर्शि न मुखं त्रपयैव तस्याम् ।
ते जानते स्म सुरशाखि पतिव्रतां किं
तां कल्पवीरुधमधिक्षिति नावतीर्णाम् ॥ १४ ॥

---

**रक्षःस्विति** ॥ यानं वाहनमेषामस्तीति यानिनः शिविकावाहिनः तेषां वर्गो रक्षस्सु राक्षसेषु निजम् अरक्षणमवेक्ष्य दृष्ट्वा तेषां हिंस्रत्वान्नास्तीति निश्चित्येत्यर्थः। निवृत्तः विद्याधरेषु देवयोनिविशेषेषु वपुषैव भैम्याः भैमीतः पञ्चमी विभक्त इति पञ्चमी । अधरतां निकृष्टत्वं विमृश्य निश्चित्य तथा गन्धर्वाणां संसदि सङ्घे तस्याः भैम्याः स्वरस्य नगन्धमगन्धमपि लेशस्याप्यभावमित्यर्थः । नञर्थेन न-शब्देन सुप्सुपेति समासः । 'गन्धो लेशे महीगुणे' इति वैजयन्ती । विमृश्य निश्चित्य विमुखोऽजनि जातः । जनेः कर्तरि लुङ् दीपजनेत्यादिना कर्तरि चिणादेशः ॥ १३ ॥

**दीनेष्विति** ॥ दीनेषु दरिद्रेषु सत्सु विद्यमानेष्वपि कृता अफला निष्फला वित्तरक्षा धनगुप्तिर्यैस्तैः कृपणैर्यक्षैः त्रपयैव तस्यां भैम्यां विषये मुखं नादर्शि न दर्शितं, दृशेर्ण्यन्तात्कर्मणि लुङ् । तथा हि ते यक्षास्तां दमयन्तीम् अधिक्षिति क्षितौ, विभक्त्यर्थेऽव्ययीभाव । अवतीर्णामुत्पन्नां सुरशाखिपतिव्रतां कल्पवृक्षपत्नीं कल्पवीरुधं कल्पलतां न जानते स्म किम् ? ज्ञातवन्त एव अस्या वदान्यतया तेषां युक्ता लज्जेति कारणात्कार्यसमर्थनरूपोऽर्थान्तरन्यासः । ततः तेषां निधिगोपपिशाचानां कुतो वरणवार्ताऽपीति भावः ॥ १४ ॥

जन्यास्ततः फणभृतामधिपं सुरौघा-
न्माञ्जिष्ठमञ्जिमविगाहिपदोष्ठलक्ष्मीम् ।
तां मानसं निखिलवारिझरान्नवीना
हंसावलीमिव घना गमयाम्बभूवुः ॥ १५ ॥

यस्या विभोरखिलवाङ्मयविस्तरोऽय-
माख्यायते परिणतिर्मुनिभिः पुनः सा ।
उद्गत्वरामृतकरार्धपरार्धभालां
बालामभाषत सभासततप्रगल्भा ॥ १६ ॥

---

**जन्या इति** ॥ ततोऽनन्तरं जनीं वधूं वहन्तीति जन्याः वधूभृत्याः 'जन्या भृत्या नवोढाया' इति केशवः । संज्ञायां जन्या इति यत्प्रत्ययान्तो निपातः । मञ्जिष्ठाया रागद्रव्यविशेषस्येमं *माञ्जिष्ठन्तस्य मञ्जिमानं रामणीयकं विगाहत इति तद्विगाहिनी पदोष्ठस्य पदयोरोष्ठयोश्च लक्ष्मीः शोभा यस्यास्तां हंसावल्यामपि योज्यम् । ओत्वोष्ठयोः समासे वा पररूपं वक्तव्यम् । तां भैमीं नवीना घनाः मेघाः हंसावलीं निखिलाद्वारिझरात् जलप्रवाहात् मानसं मानसाख्यं सर इव सुरौघात् देवसङ्घात् अपादानात्तं विहायेति ल्यब्लोपे पञ्चमी । फणभृता-मधिपं वासुकिं गमयाम्बभूवुर्निन्युः ॥ १५ ॥

**यस्या इति** ॥ अयमखिलवाङ्मयविस्तरः शब्दप्रपञ्चो मुनिभिर्व्यासा-दिभिर्विभोर्महाशक्तेर्यस्याः देव्याः परिणतिः रूपान्तरं आख्यायते सभासु सततं प्रगल्भा सा देवी उद्गत्वरः उदित्वरः गत्वरश्च इति क्वरबन्तो निपातः । तस्या-मृतकरस्येन्दोरर्धमिव खण्डमिव परार्धमुत्कृष्टं भालं ललाटं यस्यास्तां बालां भैमीं पुनरभाषत ॥ १६ ॥

---

* अपरे तु—मञ्जिष्ठया रक्तं वस्त्रादिकं तस्य मञ्जिमानमिति व्याख्याय तेन रक्तमित्यणित्याहुः ।

आश्लेषलग्नगिरिजाकुचकुङ्कुमेन
य: पट्टसूत्रपरिरम्भणशोणशोभ: ।
यज्ञोपवीतपदवीं भजते स शम्भो:
सेवासु वासुकिरयं प्रसित: सितश्री: ॥ १७ ॥

पाणौ फणी भजति कङ्कणभूयमैशे
सोऽयं मनोहरमणीरमणीयमूर्ति: ।
कोटीरबन्धनधनुर्गुणयोगपट्ट-
व्यापारपारगममुं भज भूतभर्तु: ॥ १८ ॥

धृत्वैकया रसनयामृतमीश्वरेन्दो-
रप्यन्यया त्वदधरस्य रसं द्विजिह्व: ।

---

**आश्लेषेति** ॥ यो वासुकिराश्लेषादालिङ्गनाल्लग्नेन सक्तेन गिरिजाया: पार्वत्या: कुचयो: कुङ्कुमेन पट्टसूत्रस्य परिरम्भणात्परिवेष्टनादिव शोणशोभोऽरुणकान्ति: सन् शम्भोर्यज्ञोपवीतस्य पदवीं पदं भजते सेवासु प्रसितस्तत्पर: 'तत्परे प्रसितासक्तौ' इत्यमर: । सितश्री: शुभ्रकान्ति: स वासुकिरयमिति पुरोवर्तिनिर्देश: ॥ १७ ॥

**पाणाविति** ॥ उच्चैरुन्नत: फणी वासुकि: ऐशे ईशसम्बन्धिनि पाणौ मनोहराभिर्मणीभी रमणीयमूर्ति: कङ्कणभूयं कङ्कणत्वं भुवो भाव इति क्यप् । भजति भूतभर्तु: शिवस्य कोटीरबन्धनं कपर्दबन्धनं धनुषो गुणो मौर्वी योगपट्टश्च तेषां व्यापारस्य पारगं पारीणममुं वासुकिं भज वृणीष्व । अत्रैकस्य वासुकेरनेकेषु कोटीरादिषु क्रमेण वृत्ते: पर्यायभेद: । अथानुभावविशेषाद्यौगपद्यसम्भवे तु समुच्चय: ॥ १८ ॥

**धृत्वेति** ॥ एकया रसनया ईश्वरेन्दोर्हरशिरश्चन्द्रस्य अमृतमन्यया रसनया त्वदधरस्य रसमपि रसं च धृत्वा युगपदिवास्वादयन् एतदुभयस्य एतस्य रसद्वयस्य विशेषमन्तरं निर्णेतुं क्षम: समर्थ: स्याद्यदि द्विजिह्वो रसना-

आस्वादयन् युगपदेष परं विशेषं
निर्णेतुमेतदुभयस्य यदि क्षमः स्यात् ॥ १९ ॥

आशीविषेण रदनच्छददंशदान-
मेतेन ते पुनरनर्थतया न गण्यम् ।
बाधां विधातुमधरे हि न तावकीने
पीयूषसारघटिते घटतेऽस्य शक्तिः ॥ २० ॥

तद्विस्फुरत्फणविलोकनभूतभीतेः
कम्पञ्च वीक्ष्य पुलकञ्च ततोऽनु तस्याः ।
सञ्जातसात्त्विकविकारधियः स्वभृत्यान्
नृत्यान्न्यषेधदुरगाधिपतिर्विलक्षः ॥ २१ ॥

---

द्वयवानेष परमेष एव क्षमो नान्य इत्यर्थः । ऐन्दवामृतादेतदधरामृतमेव ज्याय इति भावः ॥ १९ ॥

**आशीविषेणेति** ॥ आशिषि दंष्ट्रायां विषमस्येत्याशीविषो विषधरः, पृषोदरादित्वात्साधुः । 'आशीरुरगदंष्ट्रायाम्' इत्यमरः । एतेन वासुकिना (कर्त्रा) ते पुनः तव तु रदनच्छदस्य अधरस्य दंशदानं दंशकरणमनर्थतया न गण्यमनर्थत्वेन न मन्तव्यम् । कुतः हि यस्मात् पीयूषसारेण घटिते निर्मिते तावकीने त्वदीये अधरे दंशेन बाधां पीडां विधातुं अस्य शक्तिर्न घटते न सम्भवति अमृतघटितस्य कुतो विषभयमिति भावः ॥ २० ॥

**तदिति** ॥ ततो वाणीवाक्यानन्तरं तस्य वासुकेः विस्फुरतां स्फारयतां फणानां विलोकनेन भूतभीतेः सञ्जातसाध्वसायास्तस्या दमयन्त्याः कम्पं वेपथुं पुलकञ्च वीक्ष्य सञ्जाता सात्त्विकविकारधीः शृङ्गारसात्त्विकभ्रमो येषां तान् स्वभृत्यान् विलक्षो भैमीभावज्ञानलज्जित उरगाधिपतिर्वासुकिर्नृत्यादानन्दनर्तनान्न्यषेधत् न्यवारयत् स्वस्वामिवैलक्ष्याद्भैमीवैराग्यप्रतीतेस्ते खिन्ना इत्यर्थः । अत्र भृत्यानां भैमीभयसात्त्विकेषु शृङ्गारभ्रान्त्या भ्रान्तिमदलङ्कारः । स्तम्भप्रलय-रोमाञ्चाः स्वेदो वैवर्ण्यवेपथू । अश्रुवैस्वर्यमित्यष्टौ सात्त्विकाः प्रकीर्तिताः ॥ २१ ॥

तद्दर्शिभिः स्ववरणे फणिभिर्निराशै-
निश्वस्य तत्किमपि सृष्टमनात्मनीनम् ।
यत्तान् प्रयातुमनसोऽपि विमानवाहा
हा हा प्रतीपपवनाशकुनान्न जग्मुः ॥ २२ ॥

ह्रीसंकुचत्फणगणादुरगप्रधाना-
त्तां राजसङ्गमनयन्त विमानवाहाः ।
सन्ध्यानमद्दलकुलात् कमलाद्विनीय
कह्लारमिन्दुकिरणा इव हासभासम् ॥ २३ ॥

---

**तदिति** ॥ तद्दर्शिभिर्वासुकिवृत्तान्तसाक्षात्कारिभिः अत एव स्ववरणे निराशैः कैमुत्यपराहतैरित्यर्थः । फणिभिरन्यैः कर्कोटकादिनागैर्निश्वस्य निश्वासं कृत्वा तन्निश्वसितरूपं किमप्यवाच्यमात्मने हितमात्मनीनम्, आत्मविश्वजन-भोगोत्तरपदात्खः । तद्विरुद्धमनात्मनीनं सृष्टम् आत्मनो महाननर्थहेतुराचरित इत्यर्थः । कुतः यद्यस्मान्निश्वासकारणात्तान् फणिनः प्रति यातुमनसो गन्तुकामा अपि विमानं वहन्तीति विमानवाहाः शिविकावाहिनः, कर्मण्यण् । प्रतीपपवनः प्रतिकूलवायुस्तस्मादेवाशकुनाद्दुश्शकुनान्न जग्मुः दूरत एव परिजहुरित्यर्थः । अत एव हा हेति खेदे ॥ २२ ॥

**ह्रीति** ॥ विमानवाहाः शिविकावाहिनः तां दमयन्तीं ह्रिया सङ्कुचन् फणगणो यस्य तस्मादुरगप्रधानादुरगराजाद्वासुकेर्विनीयापनीय इन्दुकिरणाः हासभासं विकासलक्ष्मीं सन्ध्यायां नमद्दलकुलात्सङ्कुचत्पत्रचयात्कमलाद्विनीय कह्लारं सौगन्धिकमिव राजसङ्गमनयन्त प्रापयन् ङित्वादात्मनेपदं नीवह्योर्हरतेश्च इति वचनाद्द्विकर्मकत्वम् ॥ २३ ॥

देव्याभ्यधायि भव भीरु! धृतावधाना
भूमीभुजस्त्यजत भीममुवो निरीक्षाम् ।
आलोकिताऽपि पुनः पिबतां दृशैता-
मिच्छापगच्छति न वत्सरकोटिभिर्वः ॥ २४ ॥

लोकेशकेशवशिवानपि यश्चकार
शृङ्गारसान्तरभृशान्तरशान्तभावान् ।
पञ्चेन्द्रियाणि जगतामिषुपञ्चकेन
संक्षोभयन् वितनुतां वितनुर्मुदं वः ॥ २५ ॥

---

अथ देवी दमयन्तीं राज्ञश्च स्ववाक्य एवावधानमशादित्याह—देव्येति ॥ देव्या वाग्देव्या अभ्यधायि अभिहितं किं तत्तदाह—हे भीरु! भयशीले! भीरुशब्दादूङुत इत्यूङ् प्रत्यये सम्बुद्धौ नदीह्रस्वः । धृतमवधानं यया सा भव अवहिता शृण्वित्यर्थः । हे भूमीभुजो भूपाः! यूयञ्च भीमभुवो भैम्या निरीक्षामीक्षणास्थां गुरोश्च हल इति स्त्रियामप्रत्ययः । त्यजत, कुतः आलोकितामीक्षितामप्येतां भैमीं पुनर्दृशा पिबतामास्थया पश्यतां वो युष्माकं वत्सरकोटिभिरनन्ताब्दैरपि इच्छा दर्शनेच्छा नापगच्छति अतो मद्वाक्यमवहिताःशृणुतेत्यर्थः ॥

लोकेशेति ॥ यो वितनुरनङ्गो लोकेशकेशवशिवान् ब्रह्मविष्णुमहेशानपि शृङ्गारेण शृङ्गाररसेन सान्तरः सावकाशो विरलो भृशो गाढ आन्तरः अभ्यन्तरः शान्तभावः शान्तरसो येषां तान् रागजर्जरितवैराग्यांश्चकार पञ्चानां सङ्घः पञ्चकं 'सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेषु' इति कन्प्रत्ययः। तेनेषूणां पञ्चकेन जगतां पञ्चेन्द्रियाणि चक्षुरादीनि सङ्क्षोभयन् व्याकुलयन् स वितनुरनङ्गो वो युष्माकं मुदं वितनुतां विस्तारयतु विश्वविजयिनो भगवतः कामदेवस्य प्रसादः कस्य न श्लाघ्य इति भावः ॥ २५ ॥

पुष्पेषुणा ध्रुवममूनिषुवर्षजप्त-
हुङ्कारमन्त्रबलभस्मितशान्तिशक्तीन् ।
शृङ्गारसर्गरसिकद्व्यणुकोदरि ! त्वं
द्वीपाधिपान्नयनयोर्नय गोचरत्वम् ॥ २६ ॥

स्वादूदके जलनिधौ सवनेन सार्धं
भव्या भवन्तु तव वारिविहारलीलाः ।
द्वीपस्य तं पतिममुं भज पुष्करस्य
निस्तन्द्रपुष्करतिरस्करणक्षमाक्षि ! ॥ २७ ॥

सावर्तभावभवदद्भुतनाभिकूपे !
स्वर्भौममेतदुपवर्तनमात्मनैव ।

---

**पुष्पेषुणेति** ॥ रसोऽस्यास्तीति रासकम्, "अत इनि ठनौ" इति ठन् प्रत्ययः । द्वावणू कारणत्वेनास्य स्त इति द्व्यणुकम् अणुद्वयारब्धद्रव्यं शैषिकः कप्रत्ययः । शृङ्गारस्य सर्गे निर्माणे रसिकं प्रवृत्तं यत् द्व्यणुकं तदेवोदरं यस्यास्तस्याः सम्बुद्धिः । द्व्यणुकादिप्रक्रमेण कार्यद्रव्यारम्भ इति तार्किकाः । शृङ्गारमयसर्वाङ्गीति भावः । त्वं पुष्पेषुणा ध्रुवं सत्यमिषुवर्षे बाणमोक्षकाले जप्तः उच्चारितो यो हुङ्कारः कोपप्रयुक्तः स एव मन्त्रस्तस्य बलेन सामर्थ्येन भस्मिता भस्मीकृता तत्करोतीति ण्यन्तात्कर्मणि क्तः । सा शान्तिशक्तिः इन्द्रियनिग्रहसामर्थ्यं येषां तानमून् द्वीपाधिपान् नयनयोर्गोचरत्वं दृष्टिविषयत्वं नय पश्येत्यर्थः ॥

**स्वाद्विति** ॥ हे निस्तन्द्रपुष्करतिरस्करणक्षमाक्षि ! उन्निद्रपद्मविजयसमर्थनेत्रे ! कमलायताक्षीत्यर्थः । ततः स्वादूदके जलनिधौ मधुरोदकसमुद्रे सवनेन सवनाख्येन राज्ञा सार्धं भव्याः मनोहराः वारिविहारलीलाः जलक्रीडाविनोदाः भवन्तु । अत एव पुष्करस्य पुष्कराख्यस्य द्वीपस्य पतिं तममुं सवनं भज वृणीष्व ॥ २७ ॥

**सावर्तेति** ॥ रोम्णामम्भसाञ्च भ्रमः आवर्तः सावर्तभावेन सावर्तत्वेन भवन्नद्भुतो विस्मयो यस्मिन् स चित्रीयमाणो नाभिरेव कूपो यस्याः सा तस्याः

स्वाराज्यमर्जयसि न श्रियमेतदीया-
मेतद्गृहे परिगृहाण शचीविलासम् ॥ २८ ॥

देवः स्वयं वसति तत्र किल स्वयम्भू-
र्न्यग्रोधमण्डलतले हिमशीतले यः ।
स त्वां विलोक्य निजशिल्पमनन्यकल्पं
सर्वेषु कारुषु करोतु करेण दर्पम् ॥ २९ ॥

न्यग्रोधनादिव दिवः पतदातपादे-
र्न्यग्रोधमात्मभरधारमिवावरोहैः ।

---

सम्बुद्धिः सावर्तेत्यादि, कूपे सावर्तत्वं चित्रमिति भावः । एतस्य राज्ञः उपवर्तनं देशः, 'नीवृज्जनपदौ देशविषयौ तूपवर्तनम्' इत्यमरः । आत्मनैव भौमं भूमिभवं स्वः स्वर्गः एतदीयां श्रियमैश्वर्यमेव स्वाराज्यं स्वर्गराज्यं रोरीति रेफलोपे ढ्लोपे पूर्वस्य दीर्घोऽण इति दीर्घः । नार्जयसीति काकुः अर्जयस्येवेत्यर्थः । एतद्गृहे शचीविलासं शचीसौभाग्यं परिगृहाण स्वीकुरु । एतद्भूरेव स्वर्गः एतद्राज्यमेव स्वाराज्यम् अयमेवेन्द्रस्त्वमेवेन्द्राणी भवेति रूपकालङ्कारः ॥ २८ ॥

**देव इति** ॥ तत्र पुष्करद्वीपे हिमवच्छीतले न्यग्रोधः वटवृक्षः, 'न्यग्रोधो बहुपाद्वटः' इत्यमरः । तस्य मण्डले मण्डलाकारे तले अधस्थले यः स्वयम्भूः ब्रह्मदेवः स्वयं साक्षाद्वसति किल खलु ? स देव ईषदसमाप्तमन्यदन्यकल्पम् अन्यसदृशं तन्न भवतीत्यनन्यकल्पम् अनन्यसाधारणम् ईषदसमाप्तौ कल्पप्प्रत्ययः । निजशिल्पं स्वनिर्माणं त्वां विलोक्य सर्वेषु कारुषु शिल्पिषु मध्ये करेण करकौशलेन दर्पं करोतु अहङ्करोतु इत्यर्थः । स्रष्टुः कीर्तिकरं ते रूपशिल्पमिति भावः ॥ २९ ॥

**न्यग्रोधनादिति** ॥ दिवोऽन्तरीक्षात्पततः आपतत आतपादेः आदिशब्दात् वर्षादेश्च न्यग्भूय अधःस्थित्वा रोधनान्निवारणादिव न्यग्रोधं न्यग्रोधशब्दवाच्यमित्युत्प्रेक्षेयमुत्तरार्धे वक्ष्यमाणातपत्रत्वोत्प्रेक्षोपयोगिनी । वस्तुतस्तु

तं तस्य पाकिफलनीलदलद्युतिभ्यां
द्वीपस्य पश्य शिखिपत्रजमातपत्रम् ॥ ३० ॥

न श्वेततां चरतु वा भुवनेषु राज-
हंसस्य न प्रियतमा कथमस्य कीर्तिः ।
चित्रन्तु तद्विशदिमाद्वयमादिशन्ती
क्षीरञ्च नाम्बु च मिथः पृथगातनोति ॥ ३१ ॥

---

न्यग्रोहतीति न्यग्रोधः पचाद्यच् हकारस्य धत्वनिपातनात्साधुः । न्यक् पूर्वाद्रोहतेः तथा अवरोहन्तीत्यवरोहाः अधोमुखाः शाखाः शिफाः । 'शाखा शिफावरोहः स्यात्' इत्यमरः । तैरवष्टम्भैरात्मनो भरं शाखाभारं धरतीति तद्धारमिव स्थितमित्युत्प्रेक्षा धरतेः कर्मण्यण्प्रत्ययः । किञ्च पाक एषामस्तीति पाकिनां पक्वानां फलानां नीलदलानां नीलपलाशानाञ्च द्युतिभ्यां रक्तश्यामकान्तिभ्यां निमित्तेन तस्य द्वीपस्य पुष्करद्वीपस्य सम्बन्धि शिखिपत्रजं मयूरपिञ्छोद्भवं तत्प्रसिद्धमातपत्रं तद्वत् स्थितमिति निमित्तगुणजातिस्वरूपोत्प्रेक्षाव्यञ्जकाप्रयोगाद्गम्या । अस्याश्च प्रथमोत्प्रेक्षयाऽङ्गाङ्गिभावेन सजातीयसङ्करः । द्वितीयया सजातीयसंसृष्टिः । वटवृक्षमिति शेषः । पश्य, एतद्राजवरणादेवंविधोऽद्भुतदर्शनोत्सवलाभो भविष्यतीति भावः ॥ ३० ॥

**नेति** ॥ राजहंसस्य राजश्रेष्ठस्य कलहंसस्य च । 'राजहंसो नृपश्रेष्ठे कादम्बकलहंसयोः' इति विश्वः । अस्य सवनस्य राज्ञः प्रियतमा इष्टतमा तत्कान्ता वरटा च कीर्तिः कथं न श्वेततां न धवलीभवतु श्वितावर्णे इति द्युतादौ पठ्यते । तस्माल्लोट् । भुवनेषु लोकेषु सलिलेषु च, 'भुवनं सलिले लोके' इति विश्वः । कथं वा न चरतु किन्तु विशदिमाद्वयन्धावल्याद्वैतम् आदिशन्ती आपादयन्ती । क्षीरं चाम्बु च मिथोऽन्योन्यं पृथग्विभक्तं नातनोतीति यत्तच्चित्रं हंसानां क्षीरनीरविवेकस्य जातिधर्मत्वात्तदभावो विरुद्ध इति भावः । स चाविवेको धावल्यगुणतो न स्वरूपत इति विरोधसमाधानाद्विरोधाभासोऽलङ्कारः । तथा विशदिमाद्वयमादिशन्तीत्यनेन सामान्यालङ्कारः । सामान्यं गुणसाम्येन

शूरेऽपि सूरिपरिषत्प्रथमार्चितेऽपि
    शृङ्गारभङ्गिमधुरेऽपि कलाकरेऽपि ।
तस्मिन्नवद्यमियमाप तदेव नाम
    यत्कोमलं न किल तस्य नलेति नाम ॥ ३२ ॥

भ्रूवल्लिकिञ्चननिकुञ्चितमिङ्गितं सा
    लिङ्गं चकार तदनादरणस्य विज्ञा ।
राज्ञोऽपि तस्य तदलाभजतापवह्नि-
    चिह्नीबभूव मलिनच्छविभूमधूमः ॥ ३३ ॥

---

यत्र वस्त्वन्तरैकता इति लक्षणात् । तस्य विशेषणगत्या क्षीरनीराविवेकहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गं पूर्वार्धे च श्लेषभुवनचारित्वराजहंसप्रियतमात्वाख्यश्लिष्टाश्लिष्टप्रस्तुतकीर्तिविशेषणसाम्यादप्रस्तुतराजहंसीप्रतीतेः श्लेषसङ्कीर्णसमासोक्तिरित्येतैस्त्रिभिः सहाङ्गाङ्गिभावेन पूर्वोक्तस्य विरोधाभासस्य सङ्करः ॥ ३१ ॥

**शूरेऽपीति** ॥ इयं दमयन्ती शूरे वीरेऽपि सूरिपरिषत्सु विद्वत्सभासु प्रथमार्चिते अग्रपूज्येऽपि शृङ्गारभङ्गिमधुरे शृङ्गारविलासकान्तेऽपि कलाकरे सकलविद्यानिदानेऽपि तस्मिन् सवनाख्ये राज्ञि कोमलं कर्णामृतं नलेति नाम नामधेयं तस्य न किल नास्ति हीति यत् तन्नलनामराहित्यमेव अवद्यं दूषणं आप नाम जग्राह खल्वित्यर्थः । अनलत्वातिरिक्तमरुचिकारणं किञ्चिदपि नाभूदित्यर्थः ॥ ३२ ॥

**भ्रूवल्लीति** ॥ विशेषेण जानातीति विज्ञा अभिज्ञा, इगुपधज्ञाप्रीकिरः कः । सा दमयन्ती भ्रूवल्याः किञ्चनं किञ्चिन्निकुञ्चितं किञ्चनेति किञ्चिदर्थेऽव्ययं तस्य विशेषणसमासः । तदेवेङ्गितं चेष्टितं तस्मिन् सवने अनादरणस्य लिङ्गश्चकार भ्रूनिकोचनेनैव तदनादरं सूचितवतीत्यर्थः । तस्य राज्ञोऽपि मलिनच्छविभूमा वैवर्ण्यभूयस्त्वं स एव धूमस्तस्याः दमयन्त्याः अलाभेन जातस्तज्जः तस्य तापवह्नेः सन्तापाग्नेश्चिह्नीबभूव अनुमापकं जातमित्यर्थः । अत एवानुमानालङ्कारः ।

राजान्तराभिमुखमिन्दुमुखीमथैनां
जन्या जना हृदयवेदितयैव निन्युः ।
अन्यानपेक्षितविधौ न खलु प्रधान-
वाचां भवत्यवसरः सति भव्यभृत्ये ॥ ३४ ॥

ऊचे पुनर्भगवती नृपमन्यमस्यै
निर्दिश्य दृश्यतमतावमताश्विनेयम् ।
आलोक्यतामयमये! कुलशीलशाली
शालीनतानतमुदस्य निजास्यबिम्बम् ॥ ३५ ॥

---

साध्यसाधननिर्देशोऽनुमानमिति लक्षणात् । किं त्विह धूमाग्न्यो रूपकलब्धात्मकयोरलङ्कारगर्भीकारेण विच्छित्तिविशेषाश्रयणात्तर्कानुमानाद्भेदः ॥ ३३ ॥

**राजान्तरेति** ॥ अथ जन्या जनाः भृत्यजनाः। जन्यशब्दो व्याख्यातः। हृदयवेदितया चित्तज्ञतयैव प्रेरणां विनैवेत्यर्थः । इन्दुमुखीमेनां भैमीम् अन्यो-राजा राजान्तरं, सुप्सुपेति समासः* । तस्याभिमुखं यथा तथा निन्युः । स्वामिप्रेरणां विना कथं निन्युरत आह—अन्यानपेक्षितोऽनपेक्षितान्यः स्वाम्यादेशनिरपेक्ष इत्यर्थः । बहुव्रीहौ सर्वनामसङ्ख्ययोरुपसङ्ख्यानादन्यशब्दस्य पूर्वनिपातः। स विधिः कार्यं तस्मिन् स्वतः स्वामिकार्यसाधनसमर्थे भव्ये अकपटे भृत्ये कर्मकरे सति प्रधानवाचां स्वाम्यादेशानामवसरो न भवति नास्ति खल्वित्यर्थान्तरन्यासः ॥ ३४ ॥

**ऊच इति** ॥ भगवती भारती पुनः भूयः दृश्यतमतया दर्शनीयतमत्वेन सौन्दर्यातिशयेन अवमताववधीरितौ आश्विनेयौ अश्विनौ येन तमन्यं नृपमस्यै भैम्यैर्निर्दिश्य हस्तेन प्रदर्श्य अये! भैमि! कुलेन शीलेन सद्वृत्तेन च शालत इति तच्छाली अयं नृपः शालीनतया अधार्ष्ट्येन नतमास्यबिम्बमुदस्योन्नमय्य आलोक्यतामित्यूचे उक्तवती ब्रूञः कर्तरि लिटि तङ् । स शालाप्रवेशमर्हति लज्जयेत्यर्थे शालीनकौपीने अधृष्टाकार्ययोरिति खप्रत्ययान्तो निपातः ॥३५

---

* इदं चिन्त्यम् । मयूरव्यंसकादित्वादस्य साधुत्वमित्यपरे ।

एतत्पुरःपठदपश्रमवन्दिवृन्द-
वाग्डम्बरैरनवकाशतराम्बरेऽस्मिन् ।
उत्पत्तुमस्ति पदमेव न मत्पदाना-
मर्थोऽपि नार्थपुनरुक्तिषु पातुकानाम् ॥ ३६ ॥

नन्वत्र हव्य इति विश्रुतनाम्नि शाक-
द्वीपप्रशासिनि सुधीषु सुधीभवन्त्याः ।
एतद्भुजाबिरुदबन्दिजयानयापि
किं रागि राजनि गिराजनि नान्तरन्ते ॥ ३६ ॥

शाकः शुकच्छदसमच्छविपत्रमाल-
भारी हरिष्यति तरुस्तव तत्र चित्तम् ।

---

**एतदिति** ॥ एतस्य पुरोऽग्रे पठतामपश्रमाणां बन्दिनां वृन्दस्य वाग्डम्बरैः वागाटोपैरनवकाशतरे अत्यन्तनिरवकाशे अस्मिन्नम्बरे अन्तरिक्षे मत्पदानां मद्वाक्यानां 'पदं शब्दे च वाक्ये च' इति विश्वः । उत्पत्तुमेव पदमवकाशो नास्तीत्यतिशयोक्तिः । आकाशगुणः शब्द इति तार्किकाः । किञ्च कथञ्चिदुत्पत्तौ अपि अर्थपुनरुक्तिषु पातुकानां पततां बन्दिवाक्यैः पुनरुक्तार्थानामित्यर्थः । लषपतेत्यादिना उकञ्प्रत्ययः । मत्पदानामर्थः प्रयोजनमेव नास्ति गतार्थत्वादिति भावः ॥ ३६ ॥

**नन्विति** ॥ ननु भैमि ! अत्रास्मिन् हव्य इति विश्रुतनाम्नि प्रख्यातनामधेये शाकद्वीपं प्रशास्तीति तत्प्रशासिनि तत्स्वामिनि राजनि विषये सुधीषु विद्वत्सु सुधीभवन्त्या विदुषीभवन्त्यास्ते तवान्तरमन्तरङ्गम् अनया श्रूयमाणया एतस्य भुजाबिरुदबन्दिभ्यो बाहुप्रशस्तिस्तोतृभ्यः जाता तज्जातया गिरापि रागि रागवत् नाजनि नाजनिष्ट किमिति प्रश्नः । जनेः कर्तरि लुङि दीपजनेत्यादिना विकल्पाच्चिण्प्रत्ययः । "चिणो लुक्" इति तस्य लुक् ॥ ३७ ॥

**शाक इति** ॥ तत्र शाकद्वीपे शुकच्छदसमच्छवीनां कीरपक्षसदृशकान्तीनां पत्राणां मालां पङ्क्तिं बिभर्तीति तन्मालभारि, "इष्टकेषीकामालानां

यत्पल्लवौघपरिरम्भविजृम्भितेन
ख्याताज्जगत्सु हरितो हरितः स्फुरन्ति ॥ ३८ ॥

स्पर्शेन तत्र किल तत्तरुपत्रजन्मा
यन्मारुतः कमपि सम्मदमाददाति ।
कौतूहलं तदनुभूय विधेहि भूयः
श्रद्धां पराशरपुराणकथान्तरेऽपि ॥ ३९ ॥

---

चिततूलभारिषु" इति ह्रस्वः । शाकस्तरुः शाकवृक्षः, 'शाकवर्बरवर्धका' इत्यमरः । तव चित्तं हरिष्यति हरितो दिशो यस्य शाकतरोः पल्लवौघानां पल्लवराशीनां परिरम्भविजृम्भणेन व्याप्तिमहिम्ना हरितः हरिद्वर्णाः, 'हरितो मृगे ना कनके क्लीबं दिशि स्त्री हरिते त्रिषु' इति शाब्दिकमण्डने, जगत्सु ख्याताः हरित इत्याख्याताः स्फुरन्ति प्रथन्ते । अत्र दिक्षु हरिच्छब्दप्रवृत्ते-र्हरिद्वर्णनिमित्तायाः शाकतरुपल्लवछायाच्छुरणनिमित्तत्वासम्बन्धेऽपि तत्सम्बन्धो-क्तेस्तद्रूपातिशयोक्तिः । तया च तस्य तरोस्तादृग्विस्तारो व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ३८ ॥

**स्पर्शेनेति** ॥ तत्र द्वीपे किल तस्य तरोः पत्रेभ्यो जन्म यस्य तज्जन्मा मारुतः स्पर्शेन स्पर्शमात्रेण कमप्यवाच्यं सम्मदमानन्दमाददातीति यत् तदा-नन्ददानरूपं कौतूहलं विनोदम्, 'कौतूहलं विनोदः स्यात् कुतुकञ्च कुतूहलम्' इति हलायुधः । भूयः पुनरपि पराशरपुराणे विष्णुपुराणे यत्कथान्तरमन्या कथा तत्र श्रद्धां विधेहि विश्वासं कुरु तत्रैव सकलभूगोलवृत्तान्तकथनादेकदेश-संवादेन तदुक्तकथान्तराणामपि विश्वसनीयत्वादिति भावः । अत्र विष्णुपुराण-वाक्यम्—'शाकस्तत्र महावृक्षः सिद्धगन्धर्वसेवितः । यत् पत्रवातसंस्पर्शा-दाह्लादो जायते परः' इति ॥ ३९ ॥

क्षीरार्णवस्तव कटाक्षरुचिच्छटाना-
मध्येतु तव विकटायितमायताक्षि ! ।
वेलावनीवनततिप्रतिबिम्बचुम्बी
किर्मीरितोर्मिचयचारिमचापलाभ्याम् ॥ ४० ॥

* कल्लोलजालचलनोपनतेन पीवा
जीवातुनानवरतेन पयोरसेन ।

---

**क्षीरेति** ॥ हे आयताक्षि! तत्र शाकद्वीपे क्षीरार्णवस्तव कटाक्षरुचिच्छटानां कटाक्षकान्तिजालानां वृन्दं जालं चक्रवालं, 'जालकं पेटकं छटा' इति वैजयन्ती । विकटायितं विकटभावं विलसितमित्यर्थः । विकटशब्दाल्लोहितादिक्यङन्ताद्भावे क्तः । लोहितादिराकृतिगणः । वेलावनी कूलरेखा, 'वेला कूलेऽपि वारिधेः' इति शाश्वतः । तत्र या वनततिर्वनपङ्क्तिस्तस्याः यत् प्रतिबिम्बं तत् चुम्बति स्पृशतीति तच्चुम्बी तद्वाक् । अत एव किर्मीरितः कर्बुरितः 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरा' इत्यमरः । तस्योर्मिचयस्य तरङ्गपङ्क्तेः चारिमा चारुता, पृथ्वादित्वादिमनिचि टेरिति टिलोपः । चापलं चाञ्चल्यं युवादित्वादण्प्रत्ययः । ताभ्यां स्मारकाभ्याम् अध्येतु स्मरतु । इक् स्मरण इत्यस्माल्लोटि शेषत्वविवक्षायामेवाधीगर्थेत्यादिना षष्ठीविधानात्तदभावे कर्मणि द्वितीया । अत्र किर्मीरितोर्मिचयस्य सितासितत्वसादृश्यात् तद्विलासस्य कटाक्षविलसितस्मारकत्वात्तया स्मरणालङ्कारः ॥ ४० ॥

**कल्लोलेति** ॥ कल्लोलजालस्य तरङ्गसमूहस्य चलनात् उपनतेन प्राप्तेन जीवातुनोज्जीवकेन अनवरतेनाऽविच्छिन्नेन पयोरसेन क्षीरास्वादेन पीवा पीवरः, 'पीनपीव्नी तु स्थूलपीवरे' इत्यमरः । 'अन्येभ्योऽपि दृश्यन्ते' इति पीङः

---

* यद्यप्ययमुत्तरश्च श्लोको जीवातुव्याख्यानुपलम्भात् परित्यक्तः केषुचिद्ग्रन्थेषु तथापि मद्रपुरस्थराजकीयग्रन्थालयगते गोश्रीपुरराजकीयतृप्पुणित्तुरग्रन्थालयगते च ग्रन्थे तदुपलम्भादस्माभिरिह प्रकाश्यते ।

अस्मिन्नखण्डपरिमण्डलितोरुमूर्ति-

रध्यास्यते मधुभिदा भुजगाधिराजः ॥ ४१ ॥

त्वद्रूपसम्पदवलोकनजातशङ्का

पादाब्जयोरिह कराङ्गुलिलालनेन ।

भूयाच्चिराय कमला कलितावधाना

निद्रानुबन्धमनुरोधयितुं धवस्य ॥ ४२ ॥

बालातपैः कृतकगैरिकतां कृता द्वि-

स्तत्रोदयाचलशिलाः परिशीलयन्तु ।

त्वद्विभ्रमभ्रमणजश्रमवारिधारि

पादाङ्गुलीगलितया नखलाक्षयापि ॥ ४३ ॥

---

क्वनिप् । स प्रसिद्धो भुजगाधिराजः शेषः अस्मिन् क्षीरार्णवे अखण्डमनूनं यथा तथा परिमण्डलिता कुण्डलिता उरुमूर्तिः महाकायो यस्य स सन् मधुभिदा हरिणा अध्यास्यतेऽधिष्ठीयते ॥ ४१ ॥

**त्वदिति** ॥ किञ्च इहात्र क्षीरोदे कमला लक्ष्मीः त्वद्रूपसम्पदवलोकनाज्जातशङ्का तव सौन्दर्यं दृष्ट्वा सद्यः स्वभर्तरि शङ्कितचापला सतीत्यर्थः । धवस्य स्वप्रियस्य हरेः पादाब्जयोः मृदूनां कराङ्गुलीनां लालनेन चालनेन कराग्रेण संवाहनव्यापारेणेत्यर्थः । निद्रानुबन्धं निद्रानुवृत्तिमनुरोधयितुमनुवर्तयितुं त्वद्दर्शनप्रतिबन्धाय निद्रासक्तमेव कर्तुमित्यर्थः । चिराय बहुकालं कलितावधाना अवहिता भूयात् । अन्यथा चञ्चलचित्ताः पुमांसो न विश्वसनीया इति भावः ॥

**बालातपैरिति** ॥ तत्र शाकद्वीपे उदयाचलशिलाः बालातपैः तथा त्वद्विभ्रमभ्रमणेन तव लीलाविहारेण जातं तज्जं श्रमवारि स्वेदाम्बु तद्धारिणीभ्यः पादाङ्गुलीभ्यः गलितया स्रुतया नखलाक्षयाऽपि द्विर्द्विवारं कृतां द्विगुणीकृतामित्यर्थः । क्रियाभ्यावृत्तिगणने द्वित्रिचतुर्भ्यः सुच् । कृतकानि कृत्रिमाणि यानि गैरिकाणि धातुविशेषास्तत्तां परिशीलयन्तु अनुभवन्तु तथाभूताः सन्त्वित्यर्थः ॥

नृणां करम्बितमुदामुदयन्मृगाङ्क-
शङ्कां सृजत्वनघजङ्घि! परिभ्रमन्त्याः ।
तत्रोदयाद्रिशिखरे तव दृश्यमास्यं
काश्मीरसम्भवसमारचनाभिरामम् ॥ ४४ ॥

एतेन ते विरहपावकमेत्य तावत्
कामं स्वनाम कलितान्वयमन्वभावि ।
अङ्गीकरोषि यदि तत्तव नन्दनाद्यै-
र्लब्धान्वयं स्वमपि नन्वयमातनोतु ॥ ४५ ॥

लक्ष्मीलतासमवलम्बभुजद्रुमेऽपि
वाग्देवतायतनमञ्जुमुखाम्बुजेऽपि ।

---

**नृणामिति** ॥ हे अनघजङ्घि अनवद्यजङ्घे! नासिकोदरेत्यादिना विकल्पेन ङीप्प्रत्ययः । तत्र द्वीपे उदयाद्रिशिखरे परिभ्रमन्त्याः विहरन्त्यास्तव काश्मीरसम्भवसमारचनेन कुङ्कुमानुलेपनेन अभिराममत एव दृश्यं दर्शनीयं ऋदुपधाच्चाक्लृपिचृतेरिति क्यप् । तवास्यं (कर्तृ) करम्बितमुदां सम्मिलितानन्दानां नृणां पुंसां नृचेति विकल्पाद्दीर्घः । उदयन्मृगाङ्कशङ्कामुदीयमानचन्द्रसन्देहं भ्रान्तिं वा सृजतु करोतु । अलङ्कारोऽपि सन्देहभ्रान्तिमतोरन्यतरोऽस्तु ॥

**एतेनेति** ॥ ननु भैमि! एतेन हव्याख्येन राज्ञा ते तव विरहपावकमेत्य वियोगाग्निं प्राप्य स्वं स्वकीयं नाम हव्यसंज्ञा कामं प्रकामं कलितान्वयं गृहीतसम्बन्धं सदन्वभावि अनुभूतम् । अग्नौ हुतत्वादद्य हव्यसंज्ञा सार्थाऽजनीत्यर्थः । इत्थमनुरक्तं तं नृपमङ्गीकरोषि यदि तदायं नृपः स्वमात्मानमपि तव नन्दनाद्यैः त्वय्युत्पादितपुत्रपौत्रादिभिर्लब्धान्वयं लब्धवंशप्रतिष्ठमातनोतु धर्मप्रजासम्पत्त्यर्थत्वाद्दारपरिग्रहस्येति भावः ॥ ४५ ॥

**लक्ष्मीलतेति** ॥ लक्ष्मीरिव लता तस्याः समवलम्बः आधारभूतः भुज एव द्रुमो यस्य तस्मिन्नपि भुजार्जितसम्पद्यपीत्यर्थः । तथा वाग्देवतायाः

सामुत्र दूषणमजीगणदेकमेव
नार्थी बभूव मघवा यदमुष्य देवः ॥ ४६ ॥

लक्ष्मीविलासवसतेः सुमनःसु मुख्या
दस्मादिकृष्य भुवि लब्धगुणप्रसिद्धिम् ।
स्थानान्तरं तदनु निन्युरिमां विमान-
वाहाः पुनः सुरभितामिव गन्धवाहाः ॥ ४७ ॥

भूयस्ततो निखिलवाङ्मयदेवता सा
हेमोपमेयतनुभासमभाषतैनाम् ।
एनं स्वबाहुबहुवारनिवारितारिं
चित्ते कुरुष्व कुरुविन्दसकान्तिदन्ति ! ॥ ४८ ॥

---

सरस्वत्या आयतनं स्थानं मञ्जु मनोज्ञं मुखाम्बुजं यस्य तस्मिन्नपि लक्ष्मी-सरस्वत्योरेकाधिकरणेऽपीत्यर्थः । अमुत्र अमुष्मिन् हव्ये राज्ञि सा भैमी एकमेव दूषणमजीगणद्गणयामास गणेर्णौ चङि, ईच गण इत्यभ्यासस्येकारः । किं तद्दूषणं तदाह अमुष्य हव्यस्य देवो मघवा महेन्द्रः अर्थी याचिता न बभूवेति यत् नलस्य तु सोऽर्थी यद्दूत्यं ययाचे तत्कथमनलमेनं वृणीतेति भावः ॥ ४६ ॥

**लक्ष्मीविलासेति** ॥ तदनु तत्परिहारानन्तरं विमानवाहाः भुवि लोके लब्धा गुणेन सौन्दर्यादिना, अन्यत्र घ्राणतर्पणेन च प्रसिद्धिर्यया तां इमां दमयन्तीं गन्धवाहा वायवः सुरभितां सौरभसम्पदमिव, लक्ष्म्याः सम्पदः अन्यत्र पद्मायाः विलासवसतेर्लीलागृहात् सुमनःसु विद्वत्सु अन्यत्र पुष्पेषु मुख्यादस्मान्नृपातपद्माच विकृष्यापनीय पुनः स्थानान्तरं राजान्तरम् अन्यत्र पुष्पान्तरं निन्युः ॥ ४७ ॥

**भूय इति** ॥ ततोऽनन्तरं भूयः पुनरपि निखिलवाङ्मयदेवता सकल-वागधिदेवता सा सरस्वती हेम्ना उपमेया तनुभाः शरीरकान्तिः यस्याः ताम्

द्वीपस्य पश्य दयितं द्युतिमन्तमेतं
क्रौञ्चस्य चञ्चलदृगञ्चलविभ्रमेण ।
यन्मण्डले स किल मण्डलसन्निवेशः
पूरश्चकास्ति दधिमण्डपयःपयोधेः ॥ ४९ ॥

तत्राद्रिरस्ति भवदङ्घ्रिविहारयाची
क्रौञ्चः स्फुरिष्यति गुणानिव यस्त्वदीयान् ।
हंसावलीकलकलप्रतिनादवाग्भिः
स्कन्देषुवृन्दविवरैर्विवरीतुकामः ॥ ५० ॥

---

एनां दमयन्तीमभाषत—हे कुरुविन्दसकान्तिदन्ति ! पद्मरागसदृशदशने ! नासिकोदरेत्यादिना विकल्पादीकारः । 'कुरुविन्दः पद्मरागः' इति विश्वः । सकान्तीत्यत्र समानस्य सभावश्चिन्त्यः । स्वबाहुना बहुवारं निवारितारिं बहुशो निर्जितशत्रुमेनं राजानं चित्ते कुरुष्व अनुमन्यस्वेत्यर्थः ॥ ४८ ॥

**द्वीपस्येति** ॥ द्युतिमन्तं नाम एतं क्रौञ्चस्य क्रौञ्चाख्यस्य द्वीपस्य दयितम् अधिपतिं चञ्चलस्य तरलस्य दृगञ्चलस्य कटाक्षस्य विभ्रमेण विलासेन पश्य, यन्मण्डले यद्देशे स प्रसिद्धो मण्डलसन्निवेशो वर्तुलसंस्थानः पाण्डुः पाण्डुवर्णः दध्नो मण्डं मस्तु, 'मण्डं दधिभवं मस्तु' इत्यमरः । तस्य पयोधेः समुद्रस्य पूरो राशिश्चकास्ति किलेत्यैतिह्ये ॥ ४९ ॥

**तत्रेति** ॥ तत्र क्रौञ्चद्वीपे भवत्याः अङ्घ्रिविहारयाची त्वच्चरणक्रीडाविलासार्थी क्रौञ्चो नामाद्रिरस्ति योऽद्रिः हंसावलीकलकलानां प्रतिनादा एव वाचो वचनानि येषां तैः स्कन्दस्य कुमारस्येषुवृन्दानां विवरैस्तैरेव मुखैरित्यर्थः । त्वदीयान् गुणान्विवरीतुकामो व्याख्यातुकाम इव स्फुरिष्यति प्रकाशिष्यते । स्फुरतेः कुटादित्वाद्गुणाभावः ॥ ५० ॥

वैदर्भि ! दर्भदलपूजनयापि यस्य
गर्भे जनः पुनरुदेति न जातु मातुः ।
तस्यार्चनां रचय तत्र मृगाङ्कमौले-
स्तन्मात्रदैवतजनाभिजनः स देशः ॥ ५१ ॥

चूडाग्रचुम्बिमिहिरोदयशैलशील-
स्तेनाः स्तनन्धयसुधाकरशेखरस्य ।
तस्मिन् सुवर्णरसरूषणरम्यहर्म्य-
भूभृद्धटा घटय हेमघटावतंसाः ॥ ५२ ॥

---

**वैदर्भीति** ॥ हे वैदर्भि! यस्य देवस्य दर्भदलैः कुशपत्रैः पूजनयापि किमुत कमलदलादिपूजनयेति भावः । जनो जन्तुर्जातु कदापि पुनर्मातुर्गर्भे-नोदेति न जायते तत्पूजनस्य मुक्तिरेव फलमित्यर्थः । तत्तत्र तस्य मृगाङ्कमौले-रीश्वरस्य अर्चनां रचय पूजां कुरु । तथा हि स देशः तन्मात्रं स एवैको दैवतं येषां तेषां जनानाम् अभिजायन्ते अस्मिन्नित्यभिजनो जन्मभूमिरित्यर्थान्तर-न्यासः । ख्यातः कुलेऽप्यभिजनो 'जन्मभूम्यां कुलध्वजः' इति विश्वः । तत्रत्याः सर्वे तदेकशरणास्तत्सेवयोत्पन्नतत्वज्ञाना मुच्यन्त इति भावः ॥ ५१ ॥

**चूडाग्रेति** ॥ हे वैदर्भि! तस्मिन् देशे स्तनन्धयतीति स्तनन्धयः । "नासिकास्तनयोर्ध्माधेटोः" इति खश्प्रत्यये मुमागमः । स्तनन्धयसुधाकरशेख-रस्य बालेन्दुशेखरस्य शम्भोः चूडाग्रचुम्बिमिहिरस्य शिखराग्रलग्नसूर्यस्य उदय-शैलस्य उदयाद्रेः शीलं सस्थानं तस्य स्तेनास्तत्सदृशीरित्यर्थः । हेमघटावतंसा उपरिस्थापितकनककलशा इत्यर्थः । सुवर्णरसरूषणेन हेमद्रवच्छुरणेन रम्याणि हर्म्याण्येव भूभृतः पर्वतास्तेषां घटाः पङ्क्तीर्घटय निर्मापय कनककलशोच्छ्रितानेक-सौवर्णप्रासादनिर्माणेन तं भगवन्तमिन्दुशेखरं भजेत्यर्थः ॥ ५२ ॥

तस्मिन्मलिम्लुच इव स्मरकेलिजन्म-
घर्मोदबिन्दुमयमौक्तिकमण्डनं ते ।
जालैर्मिलन्दधिमहोदधिपूरलोल-
कल्लोलचामरमरुत्तरुणि ! च्छिनत्तु ॥ ५३ ॥

एतद्यशो नवनवं खलु हंसवेशं
वेशन्तसन्तरणदूरगमक्रमेण ।
अभ्यासमर्जयति सन्तरितुं समुद्रान्
गन्तुञ्च निःश्रममितः सकलान् दिगन्तान् ॥ ५४ ॥

---

**तस्मिन्निति** ॥ हे तरुणि ! तस्मिन् द्वीपे दधिमहोदधेः पूरे लोलाः कल्लोला एव चामराणि तेषां मरुत् मलिम्लुचश्चोर इव, 'पाटच्चरमलिम्लुचौ' इत्यमरः । जालैर्गवाक्षरन्ध्रैर्मिलन्नन्तश्चरन् ते तव स्मरकेल्या जन्म यस्य तद्धर्मोदविन्दुमयं खेदोदकविन्दुरूप, मन्थौदनेत्यादिना उदकस्य विकल्पादुदादेशः। मौक्तिकमण्डनं मुक्ताभरणं, स्वार्थे ठक् । मौक्तिकमिति विनयादि पाठादिति वामनः । छिनत्तु छित्वा हरतु चौरा हि केनचिच्छिद्रेण प्रविश्य हारादिकं छित्वादाय पलायन्ते । अत्र खेदबिन्दुषु मौक्तिकत्वरूपणाद्रूपकालङ्कारः । तेन मलिम्लुच इत्युमायाः सङ्करः ॥ ५३ ॥

**एतदिति** ॥ नवनवं नवप्रकारं, "प्रकारे गुणवचनस्य" इति द्विर्भावः। हंसस्येव वेशः सर्वत्र प्रवेशव्यापारो यस्य तत् एतस्य राज्ञो यशः वेशन्तसन्तरणं पल्वलतरणं, 'वेशन्तः पल्वलञ्चाल्पसरः' इत्यमरः । दूरगमो दूरगमनं, "ग्रह-वृदनिश्चिगमश्च" इति अप्प्रत्ययः । तयोः क्रमेण रीत्या हंसवदेव इतोऽस्मा-द्देशात् निःश्रमं यथा तथा समुद्रान् सन्तरितुं सकलान् दिगन्तान् गन्तुं चाभ्यास-मर्जयति खलु करोति किमित्यर्थः। जिज्ञासायां खलुशब्दः । तेन पुनः पुनरेव-मभ्यस्यति किम् । अन्यथा कथमस्य सकललोकलङ्घित्वमित्युत्प्रेक्षा गम्यते ॥५४

तस्मिन् गुणैरपि भृते गणनादरिद्रै-
स्तन्वी न सा हृदयबन्धमवाप भूपे ।
दैवे निरुन्धति निबन्धनतां वहन्ति
हन्त प्रयासपरुषाणि न पौरुषाणि ॥ ५५ ॥

ते निन्यिरे नृपतिमन्यमिमाममुष्मा-
दंसावतंसशिबिकांशभृतः पुमांसः ।
रत्नाकरादिव तुषारमयूखलेखां
लेखानुजीविपुरुषा गिरिशोत्तमाङ्गम् ॥ ५६ ॥

एकैकमुद्गतगुणं धुतदूषणञ्च
हित्वान्यमन्यमुपगत्य परित्यजन्तीम् ।

---

**तस्मिन्निति** ॥ तन्वी कृशाङ्गी । "वोतो गुणवचनात्" इति विकल्पात् ङीप् । सा भैमी गणनादरिद्रैः सङ्ख्याशून्यैरसङ्ख्यैर्गुणैर्भृते पूर्णेऽपि तस्मिन् द्युतिमदाख्ये राज्ञि हृदयबन्धं मनःसङ्गं नावाप । तथा हि दैवे दिष्टे निरुन्धति प्रतिबध्नति सति प्रयासेन दुःखबाहुल्येन परुषाणि दुष्कराणि पौरुषाणि पुरुषकाराः । युवादित्वादण्प्रत्ययः । निबन्धनतां कार्यहेतुत्वं न वहन्ति इत्यर्थान्तरन्यासः । हन्तेति खेदे ॥ ५५ ॥

**त इति** ॥ ते प्रकृताः अंसावतंसस्य भुजशिरोभूषणस्य शिबिकाया अंशभृतः एकदेशधारिणः पुमांसः इमां भैमीं लेखानुजीविपुरुषाः देवानुचरजनाः 'लेखा अदितिनन्दना' इत्यमरः । तुषारमयूखलेखां चन्द्ररेखां रत्नाकराद्रत्नाकरं विहाय गिरिशोत्तमाङ्गं शिवशिर इव अमुष्मादमुं नृपं विहाय, ल्यब्लोपे पञ्चमी । अन्यं नृपतिं निन्यिरे प्रापयामासुः । ञित्वादात्मनेपदम् ॥ ५६ ॥

**एकैकमिति** ॥ जगद्भिरर्चितपादपद्मा जगद्वन्द्या सरस्वती उद्गतगुणं गुणाढ्यं धुतदूषणं निर्दोषञ्च एकैकमेकमेकं नृपं, वीप्सायां द्विर्भावः । एकं

एतां जगाद जगदर्चितपादपद्मा
पद्मामिवाच्युतभुजान्तरविच्युतांसाम् ॥ ५७ ॥

ईशः कुशेशयसनाभिशये ! कुशेन
द्वीपस्य लाञ्छिततनोर्यदि वाञ्छितस्ते ।
ज्योतिष्मता सममनेन वनीघनासु
तत्त्वं विनोदय घृतोदतटीषु चेतः ॥ ५८ ॥

वातोर्मिलोलनचलद्दलमण्डलाग्र-
भिन्नाभ्रमण्डलगलज्जलजातसेकः ।
स्तम्बः कुशस्य भविताम्बरचुम्बिचूड-
श्चित्राय तत्र तव नेत्रनिपीयमानः ॥ ५९ ॥

---

बहुव्रीहिवदिति बहुव्रीहिवद्भावात् सुपो लुक् । हित्वा अन्यमर्थ्यं नृपतिं पूर्ववत् द्विर्भावः । उपमम्य परित्यजन्तीं तमपि परिहरन्तीम् अच्युतस्य विष्णोर्भुजान्तराद्विच्युतांसां पद्मां साक्षाल्लक्ष्मीमिव स्थितामित्युत्प्रेक्षा एतां भैमीं जगाद ॥

**ईश इति** ॥ हे कुशेशयसनाभिशये ! कमलसदृशकरे ! 'पञ्चशाखः शयः पाणिः' इत्यमरः । कुशेन दर्भस्तम्भेन लाञ्छिततनोश्चिह्नितस्वभावस्य द्वीपस्य कुशद्वीपस्य ईशः स्वामी ते तव वाञ्छितः इष्टो यदि तत्तर्हि त्वं ज्योतिष्मता ज्योतिष्मन्नामकेनानेन कुशद्वीपेश्वरेण समं सह वनीभिर्घनासु वनसान्द्रासु घृतमुदकं यस्य सः घृतोदो घृतसमुद्रः उदकस्योदः संज्ञायामित्युदादेशः । तस्य तटीषु तीरेषु चेतश्चित्तं विनोदय विनोदं कारय । विपूर्वान्नुदतेर्ण्यन्ताद्विनोदशब्दाद्वा तत्करोतीति न्यन्ताल्लोटि सिप् ॥ ५८ ॥

**वातेति** ॥ तत्र कुशद्वीपे अम्बरचुम्बिनी चूडा यस्य सोऽभ्रङ्कषाग्र इत्यर्थः । अत एव वातस्य वायोरूर्मिणा तरङ्गभङ्ग्या लोलनेन कम्पनेन चलद्भिर्दलैः पत्रैरेव मण्डलाग्रैः खड्गैर्भिन्नादभ्रमण्डलान्मेघमण्डलाद्गलद्भिः स्रवद्भिर्जलैः

पाथोधिमन्थसमयोत्थितसिन्धुपुत्री-
पत्पङ्कजार्पणपवित्रशिलासु तत्र ।
पत्या सहावह विहारमयैर्विलासै-
रानन्दमिन्दुमुखि! मन्दरकन्दरासु ॥ ६० ॥

आरोहणाय तव सज्ज इवास्ति तत्र
सोपानशोभिवपुरश्मवलिच्छटाभिः ।
भोगीन्द्रवेष्टशतघृष्टिकृताभिरब्धि-
क्षुब्धाचलः कनककेतकगोत्रगात्रि! ॥ ६१ ॥

---

जातः सेको यस्य स कुशस्य स्तम्बो दर्भगुल्मः, 'अप्रकाण्डे स्तम्बगुल्मौ' इत्यमरः। नेत्राभ्यां निपीयमानः आदराद्दृश्यमानः सन् तव चित्राय विस्मयाय भविता भविष्यति ॥ ५९ ॥

**पाथोधीति** ॥ हे इन्दुमुखि! भैमि! तत्र कुशद्वीपे पाथोधिमन्थस्य अब्धिमथनस्य समये उत्थितायाः प्रादुर्भूतायाः सिन्धुपुत्र्याः लक्ष्म्याः पत्पङ्कजयोश्चरणकमलयोः, 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः । अर्पणेन पवित्राः शिलाः यासु तासु मन्दरकन्दरासु पत्या भर्त्रा सह विहारमयैर्विहाररूपैर्विलासैर्विनोदैरानन्दमावह सम्पादयस्व ॥ ५८ ॥

**आरोहणायेति** ॥ कनककेतकं स्वर्णकेतकदलं गोत्रमभिजनो यस्य तत्, तस्य गोत्रं सन्ततिर्वा, गात्रं यस्यास्तस्याः सम्बुद्धिस्तद्गात्रि! तत्सदृशगात्रीत्यर्थः. । अङ्गगात्रकण्ठेभ्य इत्यादिना ङीप् । तत्र कुशद्वीपे भोगीन्द्रस्य वासुकेर्वेष्टशतघृष्टिभिर्वेष्टनशतानां घर्षणैः कृताभिरश्मसु शिलासु वलीनां वेष्टनमार्गाणां च्छटाभिः समूहैर्हेतुभिः सोपानैः शोभत इति तच्छोभि वपुर्यस्य सः वलिकृतसोपानपङ्क्तिरब्धेः क्षुब्धाचलो मन्दराद्रिः, क्षुब्धस्वान्तेत्यादिना निपातनात्साधुः । तवारोहणाय सज्जः सज्जित इवास्ति वर्तत इत्युत्प्रेक्षा ॥ ६१ ॥

मन्था नगः स भुजगप्रभुवेष्टघृष्टि-
लेखाचलद्धवलनिर्झरवारिधारः ।
त्वन्नेत्रयोः स्वभरयन्त्रितशीर्षशेष-
शेषाङ्गवेष्टिततनुर्भ्रममातनोतु ॥ ६२ ॥

एतेन ते स्तनयुगेन सुरेभकुम्भौ
पाणिद्वयेन दिविषद्द्रुमपल्लवानि ।
आस्येन स स्मरतु नीरधिमन्थनोत्थं
स्वच्छन्दमिन्दुमपि सुन्दरि मन्दराद्रिः ॥ ६३ ॥

---

**मन्था इति** ॥ भुजगप्रभोर्वासुकेर्वेष्टैर्वेष्टनैर्या घृष्टिरेखाः घर्षणमार्गास्तासु चलन्त्यः प्रवहन्त्यो धवला निर्झरवारिधारा यस्य सः स प्रसिद्धः मन्था मन्थनदण्डो नगोऽद्रिर्मन्दराद्रिः, 'वैशाखमन्थमन्थानमन्थानो मन्थदण्डके' इत्यमरः । त्वन्नेत्रयोः स्वस्य मन्दरस्यैव भरेण भारेण यन्त्रितानि कुञ्चितानि शीर्षाणि यस्य तस्य शेषस्य भूभारं वहतः शेषाहेः शेषाङ्गेनावशिष्टकायेन वेष्टिता तनुः शरीरं यस्य स इति भ्रममातनोतु भ्रान्तिं जनयतु सर्पो हि शिरसि क्रामतोऽङ्गं स्वाङ्गेन वेष्टयतीति प्रसिद्धम् । अत्र कविसम्मतसादृश्यमूलभ्रान्तिवर्णनाद्भ्रान्तिमदलङ्कारः ॥ ६२ ॥

**एतेनेति** ॥ हे सुन्दरि! स मन्दराद्रिः । एतेनेति सर्वशेषपुरोवर्तिनिर्देशः ते तव स्तनयुगेन सुरेभस्यैरावतस्य कुम्भौ तथा पाणिद्वयेन दिविषद्द्रुमस्य कल्पवृक्षस्य पल्लवानि आस्येन इन्दुमपीत्येवं नीरधिमन्थनोत्थं सर्वाणि समुद्रमथनोत्थानि वस्तूनि, "नपुंसकमनपुंसकेनैकवचान्यतरस्याम्" इति नपुंसकत्वं वैकल्पिकमेकत्वञ्च । स्वच्छन्दं यथेष्टं स्मरतु, 'स्वच्छन्दो निरवग्रहः' इत्यमरः । अत्र कविसम्मतसादृश्यमूलस्मृतिनिबन्धनात् स्मरणालङ्कारः ॥ ६३ ॥

वेदैर्वचोभिरखिलैः कृतकीर्तिरत्ने
हेतुं विनैव धृतनित्यपरार्थयत्ने ।
मीमांसयेव भगवत्यमृतांशुमौलौ
तस्मिन् महीभुजि तयानुमतिर्न भेजे ॥ ६४ ॥

तस्मादिमां परपतेरपनीय तन्वीं
राजन्यमन्यमथ जन्यजनः स निन्ये ।
स्त्रीभावधावितपदामभिमृश्य याच्ञा-
मर्थी निवर्त्य विधनादिव वित्तवित्तम् ॥ ६५ ॥

---

**वेदैरिति** ॥ अखिलैः समस्तैः अन्यत्राखिलैरविच्छिन्नसम्प्रदायैर्वेदै-र्वेदतुल्यैर्वचोभिः सत्पुरुषवाक्यैरन्यत्र, "यतो वा" इत्यादिवेदवाक्यैः कृतं व्याकृतं कीर्तिरत्नं सत्कीर्तिः यस्य तस्मिन् हेतुं विनैव निर्हेतुकमेव । धृतो नित्यः सदातनः परार्थयत्नः स्वयमवाप्तसकलकामतया परार्थैकप्रवृत्तिर्यस्य तस्मिन् ज्योतिष्मन्नाम्नि महीभुजि भूपे तया भैम्या भगवत्यमृतांशुमौलौ ईश्वरे मीमांसया पूर्वमीमांसयेव अनुमतिरङ्गीकारो न भेजे न प्राप्तः । भजेः कर्मणि लिट् । वेदापौरुषेयवादिनी मीमांसा भगवन्तमीश्वरं न सहत इत्याशयः । पूर्णोपमा ॥

**तस्मादिति** ॥ अथानन्तरं जन्यजनो यानिवर्गः स्त्रीभावेन स्त्रीलीलया धावितपदाश्चालितचरणां स्त्र्यानुरूपचरणचेष्टयैव अन्यतो गमनमनुजानती-मित्यर्थः । 'भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु' इति वैजयन्ती । अन्यत्र स्त्रीभावे स्त्रीत्वे स्त्रीलिङ्गे धावितं वाचकत्वेन प्रवर्तितं पदं याच्ञेति पदं यस्यास्तां यजयाचयतविच्छप्रच्छरक्षो नङिति नङ्प्रत्ययस्य यजादिभ्यः पुंसि प्रयोगे याचेरेव स्त्रीलिङ्गप्रयोगादिति भावः । तन्वीं कृशाङ्गीमिमां भैमीं तस्मा-न्नरपतेरपनीय अर्थी याचकोऽभिमृश्य विमृश्योक्तरूपां याच्ञां याच्ञावृत्तिं विधनान्निर्धनात् पुंसो निवर्त्य वित्तेन धनेन वित्तः प्रतीतः विख्यात इति यावत्, वित्तो भोगप्रत्यययोरिति विदेर्लाभार्थान्निष्ठानत्वाभावान्निपातनादुभयत्रोभयं साधु

देवी पवित्रितचतुर्भुजवामभागा
वागालपत् पुनरिमां गरिमाभिरामाम् ।
अस्यारिनिष्कृपकृपाणसनाथपाणेः
पाणिग्रहादनुगृहाण गणं गुणानाम् ॥ ६६ ॥

द्वीपस्य शाल्मल इति प्रथितस्य नाथः
पाथोधिना वलयितस्य सुराम्बुनाऽयम् ।
अस्मिन् वपुष्मति न विस्मयसे गुणाब्धौ
रक्ता तिलप्रसवनासिकि ! नासि किं वा ॥ ६७ ॥

---

भुज्यत इति भोगो वित्तः प्रत्ययः ख्यातिः । तदाहुः—"वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते । विन्देर्विन्नश्च वित्तश्च भोगवित्तस्तु विन्दतेः" इति । तं वित्तवित्तं धनाढ्यमिव अन्य राज्ञोऽपत्यं राजन्यं राजानं निन्ये । राजश्वशुराद्यत् । राज्ञोऽपत्ये जातिग्रहणमिति वचनाद्राजन्यः क्षत्रियः ॥ ६५ ॥

**देवीति** ॥ पवित्रितश्चतुर्भुजस्य विष्णोर्वामभागो यया सा लक्ष्मीसरस्वत्यौ देवस्य दक्षिणवामपार्श्ववर्तिन्याविर्त्यागमः । वाग्देवी सरस्वती गरिम्णा गुणगौरवेण अन्यत्र अर्थगौरवेण अभिरामामिमां भैमीं पुनरालपत् उवाच । किमिति हे वत्से ! अरिषु निष्कृपो निष्ठुरो यः कृपाणः खड्गस्तेन सनाथः सहितः पाणिर्यस्य अस्य राज्ञो गुणानां गणं पाणिग्रहणादनु विवाहानन्तरं गृहाण जानीहि तदा ज्ञास्यसि महिमानमस्येत्यर्थः ॥ ६६ ॥

**द्वीपस्येति** ॥ हे तिलप्रसवनासिकि! तिलकुसुमसमाननासिके! नासिकोदरेत्यादिना विकल्पात् ङीष् । यो राजा सुरा मद्यमेवाम्बु यस्य तेन पाथोधिना समुद्रेण वलयितस्य सञ्जातवलयस्य वेष्टितस्येत्यर्थः । शाल्मल इति प्रथितस्य द्वीपस्य नाथः स्वामी गुणाब्धौ वपुष्मति वपुष्मदाख्ये अस्मिन् राज्ञि किं न विस्मयसे रक्ता वा अनुरक्ता च किं नासि उभयमप्युचितमेवेत्यर्थः ॥ ६७ ॥

विप्रे धयत्युदधिमेकतमं त्रसत्सु
यस्तेषु पञ्चसु बिभाय न शीधुसिन्धुः ।
तस्मिन्ननेन च निजालिजनेन च त्वं
सार्धं विधेहि मधुरा मधुपानकेलीः ॥ ६८ ॥

द्रोणः स तत्र वितरिष्यति भाग्यलभ्य-
सौभाग्यकार्मणमयीमुपदां गिरिस्ते ।
तद्द्वीपदीप इव दीप्तिभिरोषधीनां
चूडामिलज्जलदकज्जलदर्शनीयः ॥ ६९ ॥

---

**विप्र इति** ॥ शेरते अनेनेति शीधुरासवः, 'मैरेयमासवः शीधुः' इत्यमरः । शीङो धुक्प्रत्यय औणादिकः । शीधुसिन्धुरासवसमुद्रः विप्रे अगस्त्ये एकतममुदधिं धयति पिबति सति । धेटः शतृप्रत्ययः । तेषु पञ्चसु समुद्रेषु त्रसत्सु बिभ्यत्सु स्वयं न बिभाय न भीतः ब्राह्मणो न सुरां पिबेदिति निषेधादिति भावः । तस्मिन् सुराब्धौ अनेन राज्ञा च निजेन आलीजनेन च सार्धं मधुराः मनोहराः मधुपानकेलीर्विधेहि कुरु ॥ ६८ ॥

**द्रोण इति** ॥ तत्र शाल्मलिद्वीपे ओषधीनां तृणज्योतिषां दीप्तिभिस्तस्य द्वीपस्य दीप इव स्थितः अत एव चूडायां शिखरे मिलद्भिः सङ्गच्छमानैर्जलदैरेव कज्जलैर्दर्शनीयो दृष्टिप्रियः स द्रोणो द्रोणाख्यो गिरिस्ते तव भाग्यैरेव लभ्यं सौभाग्यं पतिवाल्लभ्यं तस्य कार्मणमौषधसाध्यं वशीकरणकर्म, 'मूलकर्म तु कार्मणम्' इत्यमरः । तद्युक्तात् "कर्मणोऽण्" इति स्वार्थेऽण्प्रत्ययः । तन्मयीं तद्रूपामुपदामुपायनं, 'उपायनमुपग्राह्यमुपहारस्तथोपद' इत्यमरः । वितरिष्यति दास्यति । उपलक्षणमेतत् सञ्जीवन्याद्यनेकदिव्यौषधिलाभस्ते भविष्यतीति भावः । अत्र कार्मणमयीमुपदामिति परिणामालङ्कारः । आरोप्यमाणोपदायास्तद्विषयकार्मणाकारपरिणामेन प्रकृतप्रभुचित्तावर्जनोपयोगित्वात् आरोप्यमाणमारोपविषयात्मत्वेन स्थितम् । प्रकृतस्योपयोगित्वे परिणाम उदाहृत

तद्द्वीपलक्ष्म पृथुशाल्मलितूलजालैः
क्षौणीतले मृदुनि मारुतचारुकीर्णैः ।
लीलाविहारसमये चरणार्पणानि
योग्यानि ते सरससारसकोशमृद्वि ! ॥ ७० ॥

एतद्गुणश्रवणकालविजृम्भमाण-
तल्लोचनाञ्चलनिकोचनसूचितस्य ।
भावस्य चक्रुरुचितं शिबिकाभृतस्ते
तामेकतः क्षितिपतेरपरं नयन्तः ॥ ७१ ॥

---

इति लक्षणात् । तस्य च दीप इवेत्युत्प्रेक्षया संसृष्टिः । तस्यास्तु जलदकज्जलेति रूपकेण सङ्करः ॥ ६९ ॥

**तद्द्वीपेति** ॥ हे सरससारसकोशमृद्वि ! प्रत्यग्रकमलकोमले ! मारुतेन वायुना चारु यथा तथा कीर्णैस्तद्द्वीपस्य शाल्मलिद्वीपस्य लक्ष्म चिह्नं पृथुर्महान् यः शाल्मलिवृक्षविशेषः, 'स्थिरायुः शाल्मलिर्द्वयोः' इत्यमरः । तस्य तूलजालैस्तूलसमूहैर्मृदुनि कोमले क्षौणीतले तव लीलाविहारसमये क्रीडासञ्चरणकाले चरणार्पणानि पादन्यासाः योग्यान्यनुरूपाणि भविष्यन्तीति शेषः । तच्चातिश्लाघ्यमिति भावः । अत्रानुरूपयोगोक्तेः समालङ्कारः, सा समालङ्कृतिर्योगे वस्तुनोरनुरूपयोः" इति लक्षणात् ॥ ७० ॥

**तदिति** ॥ तां भैमीमेकतः एकस्मात् क्षितिपतेरपरं क्षितिपतिं नयन्तस्ते शिबिकाभृतो जन्या एतस्य राज्ञो गुणगणश्रवणकाले विजृम्भमाणस्य तस्या दमयन्त्याः लोचनाञ्चलस्य कटाक्षस्य निकोचनेन सङ्कोचनेन सूचितस्य ज्ञापितस्य भावस्याभिप्रायस्य उचितमर्हं कृत्यं चक्रुः । अपरागज्ञानानन्तरमपसरणमेव उचितमिति भावः ॥ ७१ ॥

तां भारती पुनरभाषत नन्वमुष्मिन्
काश्मीरपङ्कनिभलग्नजनानुरागे ।
श्रीखण्डलेपमयदिग्जयकीर्तिराजि-
राजद्भुजे भज महीभुजि भैमि! भावम् ॥ ७२ ॥

द्वीपं द्विपाधिपतिमन्दपदे! प्रशास्ति
प्लक्षोपलक्षितमयं क्षितिपस्तदस्य ।
मेधातिथेस्त्वमुरसि स्फुर सृष्टसौख्या
साक्षाद्यथैव कमला यमलार्जुनारेः ॥ ७३ ॥

प्लक्षे महीयसि महीवलयातपत्रे
तत्रेक्षिते खलु तवापि मतिर्भवित्री ।

---

**तामिति** ॥ भारती तां भैमीं पुनरभाषत । किमिति ननु भैमि! काश्मीरपङ्कनिभेन कुङ्कुमपङ्कमिषेणेत्यपह्नवः । लग्नो जनानुरागो यस्मिन् तस्मिन् श्रीखण्डलेपः चन्दनलेपनं तन्मयीभिर्दिग्जयकीर्तीनां राजिभी राजन्तौ भुजौ यस्य तस्मिन्नमुष्मिन्महीभुजि राज्ञि भावमनुरागं भज । अत्र श्रीखण्डलेपे कीर्तित्वोत्प्रेक्षा गम्या ॥ ७२ ॥

**द्वीपमिति** ॥ द्विपाधिपतेर्गजेन्द्रस्येव मन्दं पदं गमनं यस्यास्तस्या सम्बुद्धिः अयं क्षितिपः प्लक्षेण प्लक्षवृक्षेण उपलाक्षतं चिह्नितं द्वीपं प्लक्षद्वीपं प्रशास्ति । तत् तस्मान्मेधातिथेर्मेधातिथिनाम्नोऽस्य राज्ञ उरसि त्वं सृष्टसौख्या जनितानन्दा सती यमलयोर्जुनवृक्षयोः ककुभवृक्षयोः तद्रूपधारिणोरसुरयोररेर्विष्णोरुरसि यथा साक्षात्कमला लक्ष्मीरिव स्फुर भाहि ॥ ७३ ॥

**प्लक्षे इति** ॥ तत्र प्लक्षद्वीपे अधिशाखं शाखयां विलम्बिनीभिर्दोलाभिः प्रेङ्खाभिः लोलमखिलाङ्गं यस्यास्तया जनतया जनसमूहेन जानतोऽनुरागो यस्मिन् तस्मिन् महीवलयस्यातपत्रे महीयांस महत्तरे प्लक्षे प्लक्षवृक्षे ईक्षते सति

खेलां विधातुमधिशाखविलम्बिदोला-
　　लोलाखिलाङ्गजनताजनितानुरागे ॥ ७४ ॥

पीत्वा तवाधरसुधां वसुधासुधांशु-
　　र्न श्रद्दधातु रसमिक्षुरसोदवाराम् ।
द्वीपस्य तस्य दधतां परिवेशवेषं
　　सोऽयं चमत्कृतचकोरचलाचलाक्षि! ॥ ७५ ॥

सूरं न सौर इव नेन्दुमवीक्ष्य तस्मि-
　　न्नश्नाति यस्तदितरत्रिदशानभिज्ञः ।
तस्यैन्दवस्य भवदास्यनिरीक्षयैव
　　दर्शेऽश्नतोऽपि न भवत्ववकीर्णिभावः ॥ ७६ ॥

---

तवापि खेलान्दोलाक्रीडां, 'क्रीडा खेला च कुर्दनम्' इत्यमरः । विधातुं कर्तुं मतिरिच्छा भवित्री भाविनी खलु । परकीयविहारदर्शनात् स्वस्यापि तदभिलाषो भवन्तीति भावः ॥ ७४ ॥

**पीत्वेति** ॥ हे चमत्कृतचकोरचलाचलाक्षि! चकितचकोरचञ्चलाक्षि! वसुधासुधांशुः भूचन्द्रः सोऽयं मेधातिथिस्तवाधरसुधामधरामृतं पीत्वा यस्य द्वीपस्य परिवेशवेषं परिध्याकारं दधताम् इक्षुरस एवोदकं यस्य तस्येक्षुरसाब्धेर्वारां वारीणां रसं स्वादं न श्रद्दधातु नाभिलषतु । 'श्रद्धास्तिक्याभिलाषयोः' इति वैजयन्ती । अमृतास्वादलोलुपस्य किमिक्षुरसगण्डूषैरिति भावः ॥ ७५ ॥

**सूरमिति** ॥ तस्मिन् प्लक्षद्वीपे तस्मादिन्दोरितरेषां त्रिदशानाम् अनभिज्ञः इन्दोरन्यं देवमभजमानो यः सूरे भक्तिर्यस्य सौरः सूर्यभक्तः, भक्तिरित्यण् । सूरं सूर्यमिव इन्दुमवीक्ष्य नावेक्ष्य नाश्नाति न भुङ्क्ते तस्यैन्दवस्य इन्दुभक्तस्य, पूर्ववदण्प्रत्ययः । भवत्या आस्यनिरीक्षयैव त्वन्मुखदर्शनेनैव सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः । दर्शे अमावास्यायामश्नतो भुञ्जानस्यापि अविकीर्णि-

उत्सर्पिणी न किल तस्य तरङ्गिणी या
त्वन्नेत्रयोरहह तत्र विपाशि जाता ।
नीराजनाय नवनीरजराजिरास्ता-
मत्राञ्जसानुरज राजनि राजमाने ॥ ७७ ॥

एतद्यशोभिरखिलेऽम्बुनि सन्तु हंसा
दुग्धीकृते तदुभयव्यतिभेदमुग्धाः ।
क्षीरे पयस्यपि पदे द्वयवाचिभूयं
नानार्थकोशविषयोऽद्य मृषोद्यमस्तु ॥ ७८ ॥

---

भावः क्षतव्रतत्वं, 'अवकीर्णि क्षतव्रतम्' इत्यमरः । त्वन्मुखस्यैव मुख्येन्दुत्वात्तद्दर्शनादेव इन्दुदर्शनव्रतिनां भोजनाधिकारसिद्धेः नास्ति व्रतभङ्गदोष इति भावः । अत्र व्रतभङ्गदोषाभावेनैव तन्मुखे मुख्येन्दुभ्रमाद्भ्रान्तिमदलङ्कारो व्यज्यते इति वस्तुनाऽलङ्कारध्वनिः ॥ ७६ ॥

**उत्सर्पिणीति** ॥ या विपाण्णाम तरङ्गिणी तद्वीपस्य उत्सृज्य सर्पिणी दूरस्था न किल ? तत्र तस्यां विपाशि विपाण्णद्यां, 'विपाशा तु विपाट्स्त्रियाम्' इत्यमरः । जाता नवा नीरजराजिः पद्मपङ्क्तिस्त्वन्नेत्रयोर्नीराजनाय आस्तां तिष्ठतु । अहहेत्यद्भुते । राजमाने दीप्यमाने अत्रास्मिन् मेधातिथिनाम्नि राजनि अञ्जसा सत्यमनुरज अनुरज्यस्व । रञ्जेर्भौवादिकाल्लोटि सिप् । "रञ्जेश्च" इत्युपधानकारस्य लोपः ॥ ७७ ॥

**एतदिति** ॥ एतस्य राज्ञो यशोभिरखिलेऽम्बुनि जले दुग्धीकृते क्षीरीकृते सति अद्य हंसास्तस्योभयस्य दुग्धाम्बुद्वयस्य व्यतिभेदे विवेके मुग्धा मूढाः सन्तु । किञ्च क्षीरे पदे पयसि, पदेऽपि क्षीरपयःपदयोर्विषय इत्यर्थः । नानार्थकोशस्य—क्षीरं नीरे च दुग्धे च पयोऽम्भसि च दुग्धे चेत्यादिनानार्थनिघण्टोर्विषयस्तत्प्रतिपाद्यभूतमित्यर्थः । द्वयवाचिभूयमर्थद्वयवाचित्वं भुवो भाव इति क्यप् । क्षीरपदपयःपदयोर्निघण्टूक्तमर्थद्वयवाचकत्वमद्य मृषोद्यं मिथ्योदितमस्तु

ब्रूमः किमस्य नलमप्यलमाजुहूषोः
कीर्तिं स चैष च समादिशतः स्म कर्तुम् ।
स्वद्वीपसीमसरिदीश्वरपूरपार-
वेलाचलाक्रमणविक्रममक्रमेण ॥ ७९ ॥

अम्भोजगर्भरुचिराथ विदर्भसुभ्रू-
स्तं गर्भरूपमपि रूपजितत्रिलोकम् ।
वैराग्यरूक्षमवलोकयति स्म भूपं
दृष्टिः पुरत्रयरिपोरिव पुष्पचापम् ॥ ८० ॥

---

सलिलस्यापि दुग्धीभावेन द्वितीयार्थासम्भवादिति भावः । राजसूयसूर्यमृषो-द्येत्यादिना निपातनात्साधुः । अत्राखिलेऽम्बुनि दुग्धीकृते इति सामान्यालङ्कारः। तदुपजीवनेन हंसानां क्षीरनीरविवेकसम्बन्धेऽपि क्षीरपयःपदयोरप्यर्थद्वय-सम्बन्धेऽपि तदसम्बन्धरूपातिशयोक्तिद्वयोन्थापनात् सङ्करः ॥ ७८ ॥

**ब्रूम इति** ॥ नलं नैषधमपि अलमत्यर्थमाजुहूषोः सस्पर्धमाह्वातुमिच्छो-र्नलसमानस्कन्धस्येत्यर्थः । ह्वयतेराङ्पूर्वात् स्पर्धायामात्मनेपदिनः सनन्ता-दुप्रत्ययः । "न लोक" इत्यादिना षष्ठीप्रतिषेधान्नलमिति कर्मणि द्वितीया । अस्य मेधातिथेर्माहात्म्यमिति शेषः । किं ब्रूमः वक्तुमशक्यमित्यर्थः । तथा हि स नलश्च एष मेधातिथिश्च स्वद्वीपयोः प्लक्षजम्बूद्वीपयोः सीमनि सरिदीश्वरपूरस्या-ब्धिप्रवाहस्य पारे वेलायां परतीररेखायाम् अचलस्य आक्रमणमेव विक्रमतम-क्रमेण यौगपद्येन कर्तुं कीर्तिं प्रयोज्यकर्त्रीं समादिशतः स्म समादिष्टवन्तौ । द्वीपान्तरेष्वप्यनयोः कीर्तिसञ्चार इति भावः ॥ ७९ ॥

**अम्भोजेति** ॥ अथैतद्वाक्यश्रवणान्तरमम्भोजगर्भवद्रुचिरा रम्या दृष्टि-स्तद्वदरुणेत्यर्थः। विदर्भसुभ्रूः वैदर्भी प्रशस्तो गर्भो गर्भरूपस्तं पूर्ववयसमपीत्यर्थः। प्रशंसायां रूपप् । रूपजितत्रिलोकं रूपेण सौन्दर्येण जितास्त्रयो लोका येन त पुष्पचापेऽपीदं योज्यम् । तं भूपं मेधातिथिं पुष्पचापं कामं पुरत्रयरिपोः

ते तां ततोऽपि चक्षुर्जगदेकदीपा-
दंसस्थलस्थितसमानविमानदण्डाः ।
चण्डद्युतेरुदयिनीमिव चन्द्रलेखां
सोत्कण्ठकैरववनीसुकृतप्ररोहाः ॥ ८१ ॥

भूपेषु तेषु न मनागपि दत्तचित्ता
विस्मेरया वचनदेवतया तयाथ ।
वाणीगुणोदयतृणीकृतपाणिवीणा-
निक्वाणया पुनरभाणि मृगेक्षणा सा ॥ ८२ ॥

---

ईश्वरस्य दृष्टिरिव वैराग्यरूक्षं वैराग्येणापरागेण रूक्षं परुषं यथा तथा अवलोकयति स्म ॥ ८० ॥

**ते इति** ॥ अंसस्थलेषु स्थितः समान एकरूपो विमानदण्डो वाहनदण्डो येषां ते समविभक्तभरा इत्यर्थः। ते धुर्यास्तां भैमीं सोत्कण्ठायाश्चन्द्ररेखोत्सुकायाः कैरववन्याः कुमुदवदस्य सुकृतप्ररोहाः भाग्यविलासाः उदयिनीं उदयोन्मुखीं चन्द्ररेखां जगदेकदीपाच्चण्डद्युतेश्चण्डांशोरिव जगदेकदीपात्ततो मेधातिथेरपि चक्षुरपनिन्युः । सूर्यस्य तेजस एव चन्द्ररूपेण कुमुदानन्दकरत्वे वराहमिहिरः—"यत्तेजः पितृधाम्नि शीतमहसः पाथोमये मण्डले संक्रान्तं कुमुदाकारस्य कुरुते कांचिद्विकासश्रियम्" इति ॥ ८१ ॥

**भूपेष्विति** ॥ अथ तेषु भूपेषु द्वीपाधिपतिषु मनागीषदपि न दत्तचित्ता असक्तान्तरङ्गा मृगेक्षणा सा भैमी अत एव विस्मेरया विस्मितया, नमिक म्पीत्यादिना रप्रत्ययः। वाणीगुणोदयेन माधुर्यादिवाग्गुणप्रकर्षेण तृणीकृतस्तिरस्कृतपाणिवीणायाः स्वकरवीणायाः निक्वाणो यया तया वीणाधिकवाणीगुणया वचनदेवतया तया अथ पुनरभाणि ॥ ८२ ॥

यन्मौलिरत्नमुदितासि स एष जम्बु-
द्वीपस्तदर्थमिलितैर्युवभिर्विभाति ।
दोलायितेन बहुना भवभीतिकम्प्रः
कन्दर्पलोक इव खात् पतितस्त्रुटित्वा ॥ ८३ ॥

विष्वग्वृतः परिजनैरयमन्तरीपै-
स्तेषामधीश इव राजति राजपुत्रि! ।
हेमाद्रिणा कनकदण्डमहातपत्रः
कैलासरश्मिचयचामरचक्रचिह्नः ॥ ८४ ॥

एतत्तरुस्तरुणि! राजति राजजम्बूः
स्थूलोपलानिव फलानि विमृश्य यस्याः ।

---

**यदिति** ॥ हे भैमि! त्वं यस्य जम्बुद्वीपस्य मौलिरत्नं भूत्वा उदिता उत्पन्नासि स एष जम्बूद्वीपस्तुभ्यं त्वदर्थं मिलितैर्युवभिर्हेतुभिर्विभाति क इव भयभीत्या रुद्रभयेन कम्प्रः अत एव बहुना अनेकेन दोलायितेन दोलनेन त्रुटित्वा खात्स्वर्गात्पतितः, 'खमिन्द्रिये सुखे स्वर्गे शून्यबिन्दौ विषायसि' इति विश्वः । कन्दर्पलोकः कामजगदिवेत्युत्प्रेक्षा विभातीत्येकान्वयो वा ॥ ८३ ॥

**विष्वगिति** ॥ हे राजपुत्रि! अन्तर्गता आपो येषां तान्यन्तरीपाणि प्लक्षद्वीपादीनि, 'द्वीपोऽस्त्रियामन्तरीपम्' इत्यमरः । तैरेव परिजनैर्विष्वक्समन्ताद्वृतः । हेमाद्रिणा मेरुणा कनकदण्डं कनकमयदण्डं महातपत्रं कनकातपत्रमेव यस्य सः मेरोः शिरसि विशालत्वादन्यत्र तनुत्वादेकस्यैव दण्डत्वेनातपत्रत्वेन च रूपणम् । कैलासस्य रश्मिचय एव चामरचक्रं चामरजालं तच्चिह्नं यस्य सः अयं जम्बूद्वीपः तेषां द्वीपान्तराणामधीश इव राजतीत्युत्प्रेक्षा ॥ ८४ ॥

**एतदिति** ॥ हे तरुणि! एतस्य जम्बूद्वीपस्य तरुश्चिह्नवृक्षो राजजम्बूः जम्बूविशेषः । 'अथो राजजम्बूः सुफलः सुरभिच्छद' इति वैजयन्ती । राजति स्थूलोपलान् गण्डशैलानिव स्थितानि यस्याः जम्ब्वाः फलानि विमृश्या-

सिद्धस्त्रियः प्रियमिदं निगदन्ति दन्ति-
यूथानि केन तरुमारुरुहुः पथेति ॥ ८५ ॥

जाम्बूनदं जगति विश्रुतिमेति मृत्स्ना
कृत्स्नापि सा तव रुचा विजितश्रि यस्याः ।
तज्जाम्बवद्रवभवास्य सुधाविधाम्बु
र्जम्बूः सरिद्वहति सीमनि कम्बुकण्ठि ! ॥ ८६ ॥

तस्मिन् जयन्ति जगतीपतयः सहस्र-
मस्राश्रुसार्द्ररिपुतद्वनितेषु तेषु ।

---

लोच्य सिद्धस्त्रियः प्रियं स्वदयितं दन्तियूथानि करिघटाः केन पथा तरुमारुरुहुरिति इदं वचो निगदन्ति । गजप्रमाणानि तत्फलानीत्यर्थः । त्रुविशासीरित्यत्र त्रुवेरर्थग्रहणाद्रदेर्द्विकर्मकत्वम् । अत्र जम्बूफलेषु दन्तिभ्रमोक्त्या भ्रान्तिमदलङ्कारः ॥ ८५ ॥

**जाम्बूनदमिति** ॥ कम्बोः शङ्खस्य कण्ठ इव कण्ठो यस्यास्तस्याः सम्बुद्धिः, हे कम्बुकण्ठि ! अङ्गगात्रकण्ठेत्यादिना ङीष् । तेषां पूर्वोक्तानां जाम्बवानां जम्बूफलानां द्रवात् रसाद्भवा तद्भवा, 'जम्बूः स्त्री जम्बु जाम्बवम्' इत्यमरः । फले लुक् । जम्बा वेति विकल्पादलुक् । सुधायाः विधेव विधा प्रकारो येषां तानि तद्विधानि तत्प्रकाराण्यम्बूनि यस्याः सा सुधाविधाम्बुर्जम्बाख्या सरित् अस्य जम्बूद्वीपस्य सीमनि वहति प्रवहति । किञ्च यस्या जम्बूनद्याः सम्बन्धिनी कृत्स्ना समस्ता सा प्रसिद्धा मृत्स्ना प्रशस्ता मृत्तिका 'मृण्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका' इत्यमरः । "सस्नौ प्रशंसायाम्" इति स्नप्रत्ययः । तव रुचा शरीरकान्त्या विजितश्रि निर्जितशोभं नपुंसके ह्रस्वः । जम्बूनद्यां भवं जाम्बूनदं सुवर्णमिति जगति विश्रुतिं विख्यातिमेति ॥ ८६ ॥

**तस्मिन्निति** ॥ रम्भे कदलिस्तम्भाविवोरू यस्याः सा रम्भोरूः, ऊरूत्तरपदादौपम्य इत्यूङ्प्रत्ययः । तस्याः सम्बुद्धौ नदीह्रस्वः । हे रम्भोरु !

रम्भोरु ! चारु कतिचित्तव चित्तबन्धि-
रूपान्निरूपय मुदाहमुदाहरामि ॥ ८७ ॥

प्रत्यर्थियौवतवतंसतमालमालो-
न्मीलत्तमःप्रकरतस्करशौर्यसूर्ये ।
अस्मिन्नवन्तिनृपतौ गुणसन्ततीनां
विश्रान्तिधामनि मनो दमयन्ति ! किन्ते ॥ ८८ ॥

तत्रानुतीरवनवासितपस्विविप्रा
सिप्रा तवोर्मिभुजया जलकेलिकाले ।
आलिङ्गनानि दधती भविता वयस्या
हास्यानुबन्धरमणीयसरोरुहास्या ॥ ८९ ॥

---

तस्मिन् जम्बूद्वीपे जगतीपतयः भूपतयः सहस्रं जयन्ति असैः शोणितैः अश्रुभिर्बाष्पैश्च यथासङ्ख्यं सार्द्राः सिक्ता रिपवस्तद्वनिताश्च येषां तेषु हतारिष्वित्यर्थः । तेषु भूपेषु मध्ये कतिचित् चित्तबन्धि चित्तग्राहि रूपं येषां तान् भूपानहमुदाहरामि कथयामि मुदा हर्षेण चारु निरूपय सम्यगवधारय ॥ ८७ ॥

**प्रत्यर्थीति** ॥ हे दमयन्ति ! प्रत्यर्थिनां रिपूणां यौवतं युवतिसमूहम् । भिक्षादित्वादण्प्रत्ययः । तस्य वतंसास्तमालमालास्ता एव उन्मीलत्तमांसि तेषां प्रकरस्य तस्करमपहारकं यच्छौर्यं तत्र सूर्ये गुणसन्ततीनां गुणसम्पदां विश्रान्तिधामनि विश्रामस्थाने अस्मिन्नवन्तिनृपतौ अवन्तिनाथे ते मनः किम्? ॥ ८८ ॥

**तत्रेति** ॥ तत्र अवन्तिदेशे अनुतीरं तीरे, विभक्त्यर्थे वा यस्य चायाम इति वा अव्ययीभावः । तद्वनानि यावत्तीरमायतानीत्यर्थः । तद्वासिनस्तपस्विनो विप्रा यस्यां सा सिप्रा नदी तव जलकेलिकाले ऊर्मिरेव भुजा तया आलिङ्गनानि दधती कुर्वती तथा हास्यं विकासं स्मितञ्च तदनुबन्धेन तद्योगेन रमणीयं सरोरुहमेवान्यत्र तदिवास्यं यस्याः सा सती वयस्या भविता सखी भविष्यति ॥

अस्याधिशय्य पुरमुज्जयिनीं भवानी
जागर्ति या सुभगयौवतमौलिमाला ।
पत्यार्धकायघटनाय मृगाक्षि ! तस्याः
शिष्या भविष्यसि चिरं वरिवस्ययापि ॥ ९० ॥

निःशङ्कमङ्कुरिततां रतिवल्लभस्य
देवः स्वचन्द्रकिरणामृतसेचनेन ।
तत्रावलोक्य सुदृशां हृदयेषु रुद्र-
स्तद्देहदाहफलमाह स किं न विद्मः ॥ ९१ ॥

---

**अस्येति** ॥ भवस्य पत्नी भवानी पार्वती, इन्द्रवरुणभवेत्यादिना ङीवानुगागमश्च । अस्य अवन्तिनाथस्य उज्जयिनीं पुरमधिशय्याधिष्ठाय अयङ् यिक्ङितीत्ययङादेशः, "अधिशीङ्स्थासां कर्म" इति अधिकरणस्य कर्मत्वम् । जागर्ति प्रकाशते या भवानी सुभगस्य पतिवल्लभस्य यौवतस्य युवतिसमूहस्य मौलिमाला शिरोभूषणं हे मृगाक्षि ! पत्या भर्त्रा सह अर्धं कायस्यार्धकायः अर्धं नपुंसकमिति समासः । तस्य घटनाय तस्या भवान्याश्चिरं वरिवस्यया परिचर्यया । "नमो वरिवश्चित्रङः क्यच् अप्रत्ययात्" इति स्त्रियामकारप्रत्यये टाप् । शिष्यापि भविष्यसि न केवलं पूर्वोक्तसिप्राविहारादिसुखसम्पत्तिरेव किन्तु सर्वसौभाग्यप्रधानभूतं भवानी शिष्यत्वमपि ते भविष्यतीति भावः ॥ ९०

**निःशङ्कमिति** ॥ तत्र उज्जयिन्यां स देवो रुद्रो महाकालनाथः । सुदृशां हृदयेषु स्वचन्द्रकिरणामृतसेचनेनैव रतिवल्लभस्य स्मरस्य निःशङ्कमङ्कुरिततां सञ्जाताङ्कुरत्वं पुनरुत्पन्नत्वमिति यावत् । चन्द्रभासां स्मरोद्दीपकत्वादिति भावः । अवलोक्य तस्य कामदेहदाहस्य स्वकृतस्य फलं किमाह ? किं ब्रूते ? न विद्मः । स्वदग्धस्य कामस्य स्वशिरश्चन्द्रिकासेकादेव दग्धबदरादिवत्पुनः सहस्रधा प्रादुर्भावे स्वप्रयासस्य किं प्रयोजनं वक्ष्यतीत्यर्थः ॥ ९१ ॥

आगःशतं विदधतोऽपि समिद्धकामा
नाधीयते परुषमक्षरमस्य वामाः ।
चान्द्री न तत्र हरमौलिशयालुरेका-
ऽनध्यायहेतुतिथिकेतुरपैति लेखा ॥ ९२ ॥

भूपं व्यलोकत न दूरतरानुरक्तं
सा कुण्डिनावनिपुरन्दरनन्दना तम् ।
अन्यानुरागविरसेन विलोकनाद्वा
जानामि सम्यगविलोकनमेव रम्यम् ॥ ९३ ॥

---

**आग इति** ॥ समिद्धकामाः नित्यप्रदीप्तमन्मथाः । अत एव वामाः वक्रशीला अपि स्त्रियः । 'प्रतीपदर्शिनी वामा' इत्यमरः । आगसामपराधानां शतं विदधतः कुर्वाणस्याप्यस्य राज्ञः परुषमक्षरं निष्ठुरवाक्यं नाधीयते नामनन्ति न जल्पन्तीत्यर्थः । अत्र हेतुमाह—तत्रोज्जयिन्यामनध्यायहेतुतिथेः शुक्लप्रतिपदः केतुचिह्नभूता हरमौलौ शयालुः स्थायुका आलुचि शीङ्ग्रहणादालुच् । एका चान्द्री रेखा कला नापैति । तत्र हरशिरोगतैकेन्दुकलानित्ययोगात्सर्वासामपि तिथीनां शुक्लप्रतिपत्त्वेन परुषाक्षरश्रुतीनां नित्यानध्याय इत्यर्थः । तत्र नित्यसन्निहितहरशिरश्चन्द्रिकोद्दीपितमन्मथाग्नितया खण्डितादयोऽपि नायिकाः शतशोपराध्यन्तमप्येनं परुषमाभाषितुं नोत्सहन्त इति भावः ॥ ९२ ॥

**भूपमिति** ॥ कुण्डिनावनिपुरन्दरस्य कुण्डिनप्रधानभूमीन्द्रस्य भीमभूपस्य नन्दना दुहिता । नन्द्यादित्वात् ल्युट्प्रत्यये टाप् । सा दमयन्ती दूरतरानुरक्तं रागादासक्तं तं भूपं न व्यलोकत नैक्षत । अत्रैतदेव वरमित्याहुः—अन्यानुरागाद्विरसेनापरागेण विलोकनात्सम्यगत्यन्तमविलोकनमेव रम्यमिति जानामि ॥ ९३ ॥

भैमीङ्गितानि शिविकामधरे वहन्तः
साक्षान्न यद्यपि कथञ्चन जानते स्म ।
जज्ञुस्तथापि सविधस्थितसंमुखीन-
भूपालभूषणमणिप्रतिबिम्बितेन ॥ ९४ ॥

भैमीमवापयत जन्यजनस्तदन्यं
गङ्गामिव क्षितितलं रघुवंशदीपः ।
गाङ्गेयपीतकुचकुम्भयुगाञ्च हार-
चूडासमागमवशेन विभूषिताञ्च ॥ ९५ ॥

---

**भैमीति** ॥ शिविकामधरे अधःप्रदेशे वहन्तो वोढारो भैमीङ्गितानि भैमीचेष्टितानि कथञ्चन कथञ्चिदपि साक्षात्प्रत्यक्षं न जानते स्म । यद्यपि नाजानन्तैव । 'यद्यपीत्यवधारण' इति केशवः । तथापि सविधे समीपे स्थितेषु सन्मुखं दर्शनमेष्विति सम्मुखीनेषु साम्मुख्येन बिम्बग्राहिष्वित्यर्थः । यथामुख-सम्मुखस्य दर्शनः इति खप्रत्ययः । भूपालस्यावन्तिराजस्य भूषणमणिषु प्रति-बिम्बितेन भैमीप्रतिबिम्बेन कारणेन जज्ञुरज्ञासिषुः । जानातेर्लिट् ॥ ९४ ॥

**भैमीति** ॥ जन्यजनो वाहनजनः गाङ्गेयं हेम तद्वत्पीतं हरिद्रावर्णम् अन्यत्र गाङ्गेयेन भीष्मेण पीतं, 'पीतं स्यात्पीतगौरयोः' इति विश्वः । 'कशेरु-हेम्नोर्गाङ्गेयं गाङ्गेयो गुहभीष्मयोः' इति वैजयन्ती । तादृङ् कुचकुम्भयुगं यस्यास्तां हाराः मुक्ताहाराः चूडा बाहुविभूषणानि, 'चूडा बाहुविभूषणं' इति विश्वः । अन्यत्र हरस्येयं हारी । शिरश्चूडा शिखा । हारचूडा पुंवत्कर्मधारय-जातीयदेशीयेष्विति पुंवद्भावः । तत्समागमवशेन तद्योगबलेन विभूषिताञ्च भैमीं रघुवंशदीपो भगीरथो गङ्गां भागीरथीं क्षितितलमिव ततोऽन्यं नृपमवापयत निनाय । आप्नोर्ण्यन्ताल्लङि "णिचश्च" इति तङ् ॥ ९५ ॥

तां मत्स्यलाञ्छनदराञ्चितचापभासा
नीराजितभ्रुवमभाषत भाषितेशा ।
व्रीडाजडे! किमपि रूपय चेतसा चेत्
क्रीडारसं वहसि गौडबिडौजसीह ॥ ९६ ॥

एतद्यशोभिरमलानि कुलानि भासां
तथ्यं तुषारकिरणस्य तृणीकृतानि ।
स्थाने ततो वसति तत्र सुधाम्बुसिन्धौ
रङ्कुस्तदङ्कुरवनीकवलाभिलाषात् ॥ ९७ ॥

आलिङ्गितः कमलवत्करकस्त्वयाऽयं
श्यामः सुमेरुशिखयेव नवः पयोदः ।

---

**तामिति** ॥ भाषितेशा वाग्देवता मत्स्यलाञ्छनस्य कामस्य दराञ्चितस्य किञ्चिन्निमित्तस्य चापस्य भासा कान्त्या नीराजिते भ्रुवौ यस्यास्तां भैमीमभाषत । किमिति हे व्रीडाजडे! लज्जालसे! चेतसा इह गौडविडौजसि गौडदेवेन्द्रे क्रीडारसं क्रीडारागं वहसि चेत् किमपि रूपय किञ्चित् सूचय ॥ ९६ ॥

**एतदिति** ॥ एतस्य राज्ञो यशोभिः तुषारकिरणस्येन्दोरमलानि भासाकुलानि कान्तिवृन्दानि तृणीकृतानि नैर्मल्यगुणेन तुच्छीकृतानि तृणत्वं प्रापितानि तथ्यं सत्यम् । ततस्तृणीकरणादेव रङ्कुरङ्कमृगस्तदङ्कुरवनीकवलेषु तृणाङ्कुरपूलग्रासेष्वभिलाषादेव सुधाम्बुसिन्धौ अमृतोदकश्लाघ्ये तत्र तस्मिन्निन्दौ वसतीत्युत्प्रेक्षा स्थाने युक्तं, 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः । तृणोदकसम्पन्नस्थले मृगास्तिष्ठन्तीति भावः ॥ ९७ ॥

**आलिङ्गित इति** ॥ कमलवन्तौ पद्मपेखायुक्तौ करौ पाणी यस्य सः । शैषिकः कप् । अन्यत्र कमलवन्तो जलवन्तस्तदारब्धाः करका वर्षोपला यस्मिन् सः । 'सलिलं कमलं जलम्' इत्यमरः । श्यामः उभयत्र श्यामवर्णः स पयोदः

कन्दर्पमूर्धरुहमण्डनचम्पकस्रग्-
दामत्वदङ्गरुचिकञ्चुकितश्चकास्तु ॥ ९८ ॥

एतेन सम्मुखमिलत्करिकुम्भमुक्ताः
कौक्षेयकाभिहतिभिर्विबभुर्विमुक्ताः ।
एतद्भुजोष्मभृशनिःसहया विकीर्णाः
प्रस्वेदबिन्दव इवारिनरेन्द्रलक्ष्म्या ॥ ९९ ॥

आश्चर्यमस्य ककुभामवधीनवाप-
दाजानुगाद्भुजयुगादुदितः प्रतापः ।
व्यापत् सदाशयविसारितसप्ततन्तु-
जन्मा चतुर्दश जगन्ति यशःपटश्च ॥ १०० ॥

---

सुमेरोः शिखया शृङ्गरेखयेव त्वयाऽयं नृपः आलिङ्गितः सन् कन्दर्पस्य मूर्धरुहाणां केशानां मण्डनं यच्चम्पकस्रगेव दाम गुणस्तदिव यत् त्वदङ्गं तस्य रुच्या कान्त्या कञ्चुकितः सञ्जातकञ्चुकश्चकास्तु दीप्यताम् ॥ ९८ ॥

**एतेनेति** ॥ एतेन राज्ञा कौक्षेयकाभिहतिभिरसिघातैः कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेष्विति ढकञ्प्रत्ययः । विमुक्ताः विक्षिप्ताः सम्मुखं यथा तथा मिलतां सङ्गच्छमानानां करिणां कुम्भेषु मुक्ता मौक्तिकानि एतस्य राज्ञो भुजोष्मणो भुजप्रतापस्य भृशं न सहत इति निःसहा असहा, पचाद्यच् । तया भुजोष्मसन्तप्तयेत्यर्थः । अरिनरेन्द्राणां लक्ष्म्या विकीर्णा विसृष्टाः प्रस्वेदबिन्दव इव विबभुरित्युत्प्रेक्षा ॥ ९९ ॥

**आश्चर्यमिति** ॥ अस्य राज्ञः आजानु जानुपर्यन्तं गच्छतीति तद्गाददूरगामिन इत्यर्थः । भुजयुगादुत्थितः प्रतापः ककुभामवधीन् दिगन्तानवापत् । किञ्च सता शुद्धेनाशयेन चित्तेन विसारितेभ्योऽनुष्ठितेभ्यः सप्ततन्तुभ्यः क्रतुभ्यः 'सप्ततन्तुर्मुखः क्रतुः' इत्यमरः । अन्यत्र सदा सर्वदा शयेन पाणिना विसारितेभ्यः प्रसारितेभ्यः सप्तभ्यस्तन्तुभ्यः जन्म यस्य सः यशःपटः चतुर्दश जगन्ति

औदास्यसंविदविलम्बितशून्यमुद्रा-
मस्मिन् दृशोर्निपतितामवगम्य भैम्याः ।
स्वेनैव जन्यजनतान्यमजीगमत्तां
सुज्ञं प्रतीङ्गितविभावनमेव वाचः ॥ १०१ ॥

एतां कुमारनिपुणां पुनरप्यभाणी-
द्वाणी सरोजमुखि ! निर्भरमारभस्व ।
अस्मिन्नसंकुचितपङ्कजसख्यशिक्षा-
निष्णातदृष्टिपरिरम्भविजृम्भितानि ॥ १०२ ॥

---

व्यापत् व्यानशे आश्चर्यम् । अत्रात्यन्तादूरगामिनः कारणात् अतिदूरगामियशसः तन्तुसप्तकाच्चतुर्दशभुवनव्यापि यशःपटस्योत्पत्त्या विरुद्धकार्योत्पत्तिलक्षणो विषमालङ्कारः । क्रत्वन्तानुष्ठानं दिगन्तविश्रान्तकीर्तिसम्पत्तिश्चाजानुबाहुत्वस्य फलमिति भावः ॥ १०० ॥

**औदास्येति** ॥ जनीं वधूं वहतीति जन्या, सा च सा जनता जनजनसमूहश्च । षष्ठीसमासे असामर्थ्यात्तदन्तविध्याभावाच्च विशेषणसमासः । अस्मिन् गौडभूपे निपतितां भैम्या दृशोः सम्बन्धिनीं उदास्त इत्युदासा, पचाद्यच् । स्त्रियां टाप् । तस्या भाव औदास्यमौदासीन्यं ब्राह्मणादेराकृतिगणत्वात् ष्यञ् । तत्सम्विदा उपेक्षाबुद्ध्याऽविलम्बितां शून्यमुद्रां निःस्पृहावस्थामवगम्य स्वेनैव स्वत एव वाचं विनैव तां भैमीमन्यं नृपमजीगमत् गमितवती । गमेर्णौ चङ् । तथा हि सुज्ञं विज्ञं प्रति इङ्गितविभावनमाकारप्रकटनमेव वाचः प्रेरणानि स्वामीङ्गितज्ञस्य हि किं तद्वाग्भिरित्यर्थः ॥ १०१ ॥

**एतामिति** ॥ वाणी कुमारी च सा निपुणा च तां कुमारनिपुणाम् । कुमारश्रमणादिभिरिति समासः । "स्त्रियाः पुंवत्" इत्यादिना पुंवद्भावः । एतां भैमीं पुनरप्यभाणीदवोचत्—हे सरोजमुखि ! अस्मिन् नृपे असङ्कुचितेन विकसितेन पङ्कजेन सह सख्यशिक्षायां मैत्रीकरणे निष्णातया कुशलया

प्रत्यर्थिपार्थिवपयोनिधिमाथमन्थ-
पृथ्वीधरः पृथुरयं मथुराधिनाथः ।
अश्मश्रुजातमनुयाति न शर्वरीशः
श्यामाङ्ककर्बुरवपुर्वदनाब्जमस्य ॥ १०३ ॥

बाले ! ऽधराधरितनैकविधप्रवाले !
पाणौ जगद्विजयकार्मणमस्य पश्य ।
ज्याघातजेन रिपुराजकधूमकेतु-
तारायमाणमुपरज्य मणिं किणेन ॥ १०४ ॥

---

तत्सदृश्येत्यर्थः । निनदीभ्यां स्नातेः कौशल इति षत्वम् । दृष्ट्या परिरम्भ-विजृम्भितान्यालिङ्गनचेष्टितानि निर्भरं गाढमारभस्व कुरु । एनं पश्येत्यर्थः ॥

**प्रत्यर्थीति** ॥ अयं पुरोवर्ती नृपः प्रत्यर्थिपार्थिवपयोनिधिमाथे वैरि-भूपाब्धिमन्थने मन्थपृथ्वीधरो मन्थाचलः मन्दरः पृथुर्महान् मथुराधिनाथो मथुरानगरीशः श्मश्रु जातमस्य तज्जातश्मश्रु तन्न भवतीत्यश्मश्रुजातम् अजात-श्मश्रु । आहिताग्न्यादित्वान्निष्ठायाः परनिपातः । अस्य मुखाब्जं श्यामेन अङ्केन कलङ्केन कर्बुरवपुः शबलाङ्गः शर्वरीशो नानुयाति नानुकरोति । सकलङ्क-निष्कलङ्कयोः कुतः साम्यमिति भावः ॥ १०३ ॥

**बाल इति** ॥ अधरेणोष्ठेन अधरिता अधरीकृता नैकविधा अनेकविधा। न-शब्देन समासः । प्रवालाः विद्रुमपल्लवरूपा यया सा हे तथाविधे ! बाले ! अस्य मथुरेश्वरस्य पाणौ जगद्विजयस्य कार्मणं वशीकरणौषधं ज्याघातजेन किणेन ग्रन्थिना उपरज्योपरागं प्राप्य रिपोः राजकस्य राजसमूहस्य धूमकेतु-तारायमाणं धूमकेत्वाख्यनक्षत्रवदाचरन्तं तद्वदुपप्लवायमानमित्यर्थः । आचार-क्यङन्ताल्लटः शानच् । मणिं कङ्कणमाणिक्यं पश्य ॥ १०४ ॥

एतद्भुजारणिसमुद्भवविक्रमाग्नि-
चिह्नं धनुर्गुणकिणः खलु धूमलेखा ।
जातं ययारिपरिषन्मशकार्थयाश्रु-
विस्रावणाय रिपुदारदृगम्बुजेभ्यः ॥ १०५ ॥

श्यामीकृतां मृगमदैरिव माथुरीणां
धौतैः कलिन्दतनयामधिमध्यदेशम् ।
तत्राप्तकालियमहाह्रदनाभिशोभां
रोमावलीमिव विलोकयितासि भूमेः ॥ १०६ ॥

---

**एतदिति** ॥ एतस्य राज्ञो भुजादेवारणेः निर्मथ्यकाष्ठात्समुद्भवस्य समुत्पन्नस्य विक्रमाग्नेः पौरुषवह्नेः चिह्नमनुमापकं लिङ्गम्, 'निर्मन्थ्यदारुणि त्वरणिर्द्वयोः' इत्यमरः । धनुर्गुणकिणो ज्याघातरेखा धूमरेखा खलु? कुतः यया धूमरेखया अरिपरिषदो अरिसङ्घास्ता एवमशकास्तदर्थया तन्निवृत्त्यर्थया जातं, भावे क्तः । 'अर्थोऽभिधेयरवैस्तुप्रयोजननिवृत्तिषु' इत्यमरः । अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या । किञ्च रिपुदाराणां दृगम्बुजेभ्यो नयनारविन्देभ्योऽश्रुविस्रावणाय वाष्पोद्गमाय जातं धूमकेतूदयाद्राजशोको धूमोत्पीडनादश्रुस्रावश्चेति भावः ॥ १०५ ॥

**श्यामीति** ॥ माथुरीणां मथुरानगरीजातस्त्रीणाम् । तत्र जात इत्यण्प्रत्यये ङीप् । धौतैर्जलक्रीडासु क्षालितैर्मृगमदैः कस्तूरिकाभिरिवेत्युत्प्रेक्षा । श्यामीकृतां मध्यदेशे अधिमध्यदेशं मध्यदेशविशेषे अवलग्ने च । विभक्त्यर्थेऽव्ययीभावः । आप्ता प्राप्ता कालियस्य कालियनागस्य महाह्रद एव नाभिः तस्याः शोभा यया ताम् अत एव भूमेः रोमावलीमिव स्थितामित्युत्प्रेक्षा । कलिन्दतनयां कालिन्दीं तत्र मथुरायां विलोकयितासि विलोकयिष्यसि ॥१०६॥

गोवर्धनाचलकलापिचयप्रचार-
निर्वासिताहिनि घने सुरभिप्रसूने ।
तस्मिन्ननेन सह निर्विश निर्विशङ्कं
बृन्दावने वनविहारकुतूहलानि ॥ १०७ ॥

भावी करः कररुहाङ्कुरकोरकोऽपि
तद्वल्लिपल्लवचये तव सौख्यलक्ष्यः ।
अन्तस्त्वदास्यहृतसारतुषारभानु-
शोभानुकारिकरिदन्तजकङ्कणाङ्कः ॥ १०८ ॥

---

**गोवर्धनेति** ॥ गोवर्धनाचले ये कलापिचयाः केकिव्रजाः तेषां प्रचारेण सञ्चारेण निर्वासिताहिनि निष्कासितभुजङ्गमण्डले सुखसञ्चार इत्यर्थः । घने सान्द्रे निरातप इत्यर्थः । सुरभिप्रसूने फलकुसुमसमृद्ध्या विहारयोग्य इत्यर्थः । तस्मिन् प्रसिद्धे यत्र पुरा गोपालमूर्तिः कृष्णो विजहारेति भावः । वृन्दावने बृन्दाख्ये वने अनेन राज्ञा सह निर्विशङ्कं विस्रब्धं वनविहारकुतूहलानि वन-क्रीडासुखानि निर्विश भुङ्क्ष्व । 'निर्वेशो भृतिभोगयोः' इत्यमरः । साभिप्राय-विशेषणत्वात्परिकरालङ्कारः ॥ १०७ ॥

**भावीति** ॥ त्वदास्येनानेन हृतसारस्य हृतकान्तिसर्वस्वस्य तुषारभानो-श्चन्द्रस्य या शोभा पराजयनिमित्ता पाण्डुच्छाया तदनुकारी तत्सदृशो यः करिदन्तस्तज्जं कङ्कणमङ्कश्चिह्नं यस्य सः तव करः कररुहा नखाः अङ्कुरा इवेत्युपमितसमासः । त एव कोरकाः कलिकाः यस्य सोऽपि सन्नित्यर्थः । तद्वल्लिपल्लवचये बृन्दावनलताकिसलयजाले अन्तर्मध्ये सौख्येन अनायासेन लक्ष्यः सुग्रहो भावी । अत्र पल्लवापचयकाले तत्सादृश्यात्सन्दिग्धस्य भैमीकरस्य दन्तवलयेन निश्चयान्निश्चयान्तः सन्देहालङ्कारः ॥ १०८ ॥

तज्जः श्रमाम्बु सुरतान्तमुदा नितान्त-
मुत्कण्टके स्तनयुगे तव सञ्चरिष्णुः ।
खञ्जन् प्रभञ्जजनः पथिकः पिपासुः
पाता कुरङ्गमदपङ्किलमप्यशङ्कम् ॥ १०९ ॥

पूजाविधौ मखभुजामुपयोगिनो ये
विद्वत्कराः कमलनिर्मलकान्तिभाजः ।
लक्ष्मीमनेन दधताऽनुदिनं वितीर्णै-
स्ते हाटकैः स्फुटवराटकगौरगर्भाः ॥ ११० ॥

---

**तज्ज इति** ॥ तस्मिन् वृन्दावने जातः तज्जः । सप्तम्यां जनेर्डः । सुरतान्ते मुदा आनन्देन नितान्तमुत्कण्टके उत्पुलके सकण्टके च तव स्तनयुगे सञ्चरिष्णुः सञ्चरणशीलः खञ्जन् खोडन् विकलं गच्छन्नित्यर्थः । खञ्जेर्गतिवैकल्यार्थाल्लटश्शत्रादेशः । गतावित्यनुवृत्तौ 'विकलायान्तु द्वयं खञ्जति खोडति' इति भट्टमल्लः । पिपासुस्तृषितः पथिकः सदागतिः अध्वगमनश्रान्तश्च प्रभञ्जनो वायुः स एव जनः कुरङ्गमदेन मृगमदेन पङ्किलं सपङ्कमपि श्रमाम्बु स्वेदोदकम् अशङ्कमसङ्कोचं पाता पास्यति स्वेदं हरिष्यतीत्यर्थः । पिबतेः कर्तरि लुट् । यथातिश्रान्तः पान्थः कण्टकश्लिष्टदेशस्थमपि पङ्किलमपि पाथः प्रायेण खोदरपूरं पिबति तद्वदिति भावः ॥ १०९ ॥

**पूजेति** ॥ मखभुजां देवानां पूजाविधौ यज्ञादिकर्मणि उपयोगिनः प्रतिग्रहोपकारिणो ये विदुषां कराः पाणयः कमलानां या निर्मला कान्तिस्तद्भाजः ते विद्वत्कराः लक्ष्मीं दधता श्रीमता अनेन राज्ञा अनुदिनं प्रतिदिनं वितीर्णैर्दत्तैर्हाटकैः सुवर्णैः । 'स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्' इत्यमरः । स्फुटाः उज्ज्वलाः वराटकाः कर्णिकाः, 'बीजकोशो वराटकः, कर्णिका कर्णिकश्च' इति वैजयन्ती । तैर्गौराः पीता अरुणा वा गर्भा अभ्यन्तराणि येषां ते कृता इति शेषः । 'गौरोऽरुणे सिते पीत' इति विश्वः । कमलानां कर्णिकावत्पाणिकमलानां हाटकैस्तद्वत्त्वं सम्पादितमित्यर्थः ॥ ११० ॥

वैरिश्रियं प्रति नियुद्धमवाप्नुवन् यः
किञ्चिन्न तृप्यति धारावलयैकवीरः ।
स त्वामवाप्य निपतन्मदनेषु वृन्द-
स्यन्दीनि तृप्यतु मधूनि पिबन्निवायम् ॥ १११ ॥

तस्मादियं क्षितिपतिक्रमगम्यमान-
मध्वानमैक्षत नृपादवतारिताक्षी ।
तद्भावबोधबुधतां निजचेष्टयैव
व्याचक्षते स्म शिबिकानयने नियुक्ताः ॥ ११२ ॥

भूयोऽपि भूपमपरं प्रति भारती तां
त्र्यक्षचमूरुचलचक्षुषमाचचक्षे ।

---

**वैरीति** ॥ धरावलये भूमण्डले एकवीरो यो मथुरापतिः वैरिश्रियं प्रत्यर्थिलक्ष्मीं प्रति लक्षीकृत्य नियुद्धं बाहुयुद्धम् आलिङ्गनमिति यावत् । 'नियुद्धं बाहुयुद्धं स्यात्' इत्यमरः । तदनाप्नुवन् किञ्चिदीषदपि न तृप्यति न तद्विना सन्तुष्यतीत्यर्थः । स नियुद्धप्रियोऽयं राजा त्वामवाप्य निपततां मदनेषूणा-मिषुकुसुमानां वृन्दात्स्यन्दन्ते स्रवन्तीति तत्स्यन्दीनि मधूनि मकरन्दान् पिबन्निव तृप्यतु । अत्र मदनेषुमधुपानोत्प्रेक्षया तेषामेवेषूणां त्वत्समागमाद्रागानन्द-कारित्वप्रतीतेरलङ्कारेण वस्तुध्वनिः ॥ १११ ॥

**तस्मादिति** ॥ इयं भैमी तस्मान्नृपादवतारिताक्षी निवर्तितदृष्टिः सती क्षितिपतीनां गन्तव्यनृपाणां क्रमेणानुपूर्व्या गम्यमानमध्वानमैक्षत । अथ शिबिकानयने नियुक्ताः शिबिकावाहिनस्तस्या भावबोधे अभिप्रायज्ञाने बुधतां वैदग्ध्यं निजचेष्टया, अन्यतो नयनक्रिययैव व्याचक्षते स्म ज्ञापयामासुरित्यर्थः ॥

**भूयोऽपीति** ॥ भारती भूयोऽप्यपरं भूपं प्रति त्र्यक्षचमूरुचलचक्षुषं चकितहरिणीचञ्चलाक्षीं तां भैमीमाचचक्षे । किमिति हे खञ्जनमञ्जुनेत्रे !

एतस्य काशिनृपतेस्त्वमवेक्ष्य लक्ष्मी-
मक्ष्णोर्मुदं जनय खञ्जनमञ्जुनेत्रे ! ॥ ११३ ॥

एतस्य सावनिभुजः कुलराजधानी
काशी भवोत्तरणधर्मतरिः स्मरारेः ।
यामागता दुरितपूरितचेतसोऽपि
पापं निरस्य चिरजं विरजीभवन्ति ॥ ११४ ॥

आलोच्य भाविविधिकर्तृकलोकसृष्टि-
कष्टानि रोदिति पुरा कृपयैव रुद्रः ।
नामेच्छयेति मिषमात्रमधत्त यत्तां
संसारतारणतरीमसृजत् पुरीं सः ॥ ११५ ॥

---

खञ्जनाक्षि ! मञ्जुलाक्षीत्यर्थः । एतस्य काशिनृपतेः काशिराजस्य लक्ष्मीं शोभामवलोक्याक्ष्णोः सुखञ्जनय सम्पादय ॥ ११३ ॥

**एतस्येति** ॥ स्मरारेः शिवस्य संसारार्णवकर्णधारस्य सम्बन्धिनी भवोत्तरणे भवाब्धितरणे लोकानां धर्मतरिः धर्मतरिग्रहणात् केवलं धर्मार्था नौः, 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः । सा काशी एतस्यावनिभुजः काशीराजस्य कुलराजधानी । दुरितपूरितचेतसोऽपि यां काशीमागताश्चिरजं चिरसञ्चितं पापं निरस्य अविरजसो विरजसः सम्पाद्यमाना भवन्ति विरजीभवन्ति वीतपापा मुक्ता भवन्तीत्यर्थः । अभूततद्भावे च्विः । अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्चेति सकारलोपः ॥ ११४ ॥

**आलोच्येति** ॥ रुद्रो हर· भाविन्याः विधिकर्तृकाया ब्रह्मकर्तृकाया लोकसृष्टेः प्राणिजातस्य कष्टानि दुःखान्यालोच्य विचार्य कृपयैव न तूपाध्यन्तरेणेत्यर्थः । पुरा रोदिति अरुदत् । पुरि लुङ् चास्मे इति चकारात् पुरा शब्दयोगे भूतानद्यतनार्थे लट् । ननु रोदनाद्रुद्रनामाकाङ्क्षयाऽरोदीत् । यच्छ्रूयते सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वमाशङ्क्य तद्व्याजमात्रमित्याह—नामेच्छयेति । मिषमात्रं

वाराणसी निविशते न वसुन्धरायां
तत्र स्थितिर्मखभुजां भुवने निवासः ।
तत्तीर्थमुक्तवपुषामत एव मुक्तिः
स्वर्गात्परं पदमुदेतु मुदे तु कीदृक् ॥ ११६ ॥

सायुज्यमृच्छति भवस्य भवाब्धियाद-
स्तां पत्युरेत्य नगरीं नगराजपुत्र्याः ।
भूताभिधानपटुमद्यतनीमवाप्य
भीमोद्भवे ! भवति भावमिवास्तिधातुः ॥ ११७ ॥

---

व्याजमात्रम् अधत्त धृतवान् । कुतः यद्यस्मात् स रुद्रः संसारतारणतरिं तां काशीं पुरीमसृजत् । ततो नूनं कृपयैव अरोदीदित्युत्प्रेक्षा । कृपालवो हि परदुःखेन दुःखायन्ते तत्प्रतीकरणोपायञ्च कुर्वन्तीति भावः ॥ ११५ ॥

**वाराणसीति** ॥ वाराणसी काशी वसुन्धरायां न निविशते भूलोकान्तःपातिनी न भवतीत्यर्थः । अत एव तत्र वाराणस्यां स्थितिर्निवासो मखभुजां भुवने निवासः स्वर्लोकनिवासः अत एव स्वर्गत्वादेव तस्मिन् तीर्थे काशीतीर्थे मुक्तवपुषां त्यक्तकलेवराणां मुक्तिरपवर्ग एव । तथा हि स्वर्गात्परमधिकं पदन्तु कीदृगपवर्गादन्यादृशं किं मुदे मोदाय उदेतु ? न किञ्चिदन्यदित्यर्थः । सम्भावनायां लोट् । भूलोकवासिनां स्वर्गः तद्वासिनान्तु अपवर्ग एव परं पदं न तु स्वर्ग एवोचित इति भावः ॥ ११६ ॥

**सायुज्यमिति** ॥ हे भीमोद्भवे ! भैमि ! भवाब्धियादः संसारसागरजलजन्तुजातं, 'यादांसि जलजन्तवः' इत्यमरः । नगराजपुत्र्याः पत्युः पार्वतीपतेः सम्बन्धिनीं तां नगरीं काशीमेत्य अस्तिधातुः असभुवि इत्ययं धातुर्भूताभिधानपटुं भूताभिधानसमर्थामद्यतनीं लुङमवाप्य । अद्यतनीति लुङः पूर्वाचार्याणां संज्ञा । आर्धधातुकोपलक्षणमेतत् अस्तेर्भूभावस्यार्धधातुकाधिकारात् । अद्यतनीग्रहणं तूपमानोपमेययोरभिन्नलिङ्गत्वाच्चेति द्रष्टव्यम् । भवतिभावम्

निर्विश्य निर्विरति काशिनिवासभोगा-
न्निर्माय नर्म च मिथो मिथुनं यथेच्छम् ।
गौरीगिरीशघटनाधिकमेकभावं
शर्मोर्मिकञ्चुकितमञ्चति पञ्चतायाम् ॥ ११८ ॥

न श्रद्दधासि यदि तन्मम मौनमस्तु
कथ्या निजाप्ततमयैव तवानुभूत्या ।
न स्यात्कनीयसितरा यदि नाम काश्या
राजन्वती मुदिरमण्डनधन्वना भूः ॥ ११९ ॥

---

अस्तेर्भूरिति विधानात् भूधातुत्वमिव भवस्येश्वरस्य, सयुजो भावः सायुज्यं तादात्म्यमृच्छति गच्छति ॥ ११७ ॥

**निर्विश्येति** ॥ काशिः काशी, "कृदिकारादक्तिनो वा" इति ङीषभावः । तस्यां निवासि वास्तव्यं मिथुनं स्त्रीपुंसजातं यथेच्छं भुज्यन्त इति भोगाः तान् विषयान् निर्विरति निर्विच्छेदमविच्छिन्नं यथा तथा निर्विश्योपभुज्य तथा मिथोऽन्योन्यं रहसि वा नर्म क्रीडाञ्च निर्माय कृत्वा पञ्चतायां मृतौ सत्यां गौरीगिरीशयोर्घटनादर्धाङ्गसङ्घटनादधिकमुत्कृष्टमेव शर्मोर्मिभिरानन्दलहरीभिः कञ्चुकितं सञ्जातकञ्चुकं निर्बाधमेकभावमेकाकिभावमञ्चति प्राप्नोति अन्यत्र सन्न्यासादिक्लेशान्मुक्तिः इह भोगपूर्वकदेहत्यागमात्रादेव मुक्तिरित्यर्थः ॥ ११८॥

**नेति** ॥ न श्रद्दधासि यदि मद्वाक्यं न विश्वसिसि चेत्तर्हि मम मौनमस्तु अहं तूष्णीमासे तव निजया आत्मीयया आप्ततमया प्रमाणभूतया अनुभूत्या अनुभावेनैव कथ्या कथनीयासि। किं कथ्या तदाह मुदिरा जीमूताः, 'घनजीमूत-मुदिर' इत्यमरः । तेषां मण्डनं धनुर्यस्य स तद्धन्वा देवेन्द्रः । "धनुषश्च" इत्यनङादेशः। तेन राजन्वती सुराज्ञी भूः स्वर्गभूः । राजन्वान् सौराज्य इति निपातनात्साधुः। काश्याः काशीतः, पञ्चमी विभक्त इति पञ्चमी । अतिशयेन कनीयसी कनीयसितरा अल्पीयसितरा, "युवाल्पयोः कनन्यतरस्याम्" इत्य-

ज्ञानाधिकासि सुकृतान्यधिकाशि कुर्याः
कार्यं किमन्यकथनैरपि यत्र मृत्योः ।
एकं जनाय सतताभयदानमन्य-
द्धन्ये ! वहत्यमृतसत्रमवारितार्थि ॥ १२० ॥

भूभर्तुरस्य रतिरेधि मृगाक्षि ! मूर्ता
सोऽयं तवास्तु कुसुमायुध एव मूर्तः ।
भातश्च ताविव युवां गिरिशं विराद्ध-
माराद्धुमाशु पुरि तत्र कृतावतारौ ॥ १२१ ॥

---

त्पशब्दस्य कनादेशः । घसुरूपेत्यादिना ङ्यो ह्रस्वः । न स्यान्नाम यदि स्या-देवेत्यर्थः । दिवोऽधिका काशी, दिवस्पतेरधिकः काशीराज इत्यलं वार्ताभिः । एतत्पाणिग्रहणानन्तरमनुभव एव ते कथयिष्यतीति भावः ॥ ११९ ॥

ज्ञानेति ॥ हे धन्ये ! भैमि ! ज्ञानेन अधिका उत्कृष्टासि भवसि । अतः अधिकाशि काश्यां, विभक्त्यर्थेऽव्ययीभावः । सुकृतानि सत्कर्माणि कुर्याः अथवाऽन्यकथनैः कर्तव्यान्तरोपदेशैरपि किं कार्यं किं प्रयोजनं न किञ्चिदित्यर्थः। कुतः, यत्र काश्यां जनाय मृत्योः सकाशात् सततमविच्छिन्नाभयदानमेकं वहति वर्तते । मृत्युदर्शिनां सद्य एव मृत्युञ्जयत्वप्राप्तेरिति भावः । किञ्चान्यत् यत्र अनिवारिता अर्थिनो यस्मिन् तदमृतसत्रं मोक्षदानं गङ्गोदकदानञ्च वहति प्रवर्तते । 'सत्रमाच्छादने यज्ञे सदा दाने वनेऽपि च' इत्यमरः । अमृतं तूदके मोक्ष इत्यादि काशिमृतानां शिवसारूप्यममृतत्वञ्च सिद्धमित्यन्यत्र जीवनात् काश्यां मरणमेव रमणीयमिति भावः ॥ १२० ॥

भूभर्तुरिति ॥ हे मृगाक्षि ! त्वमस्य भूभर्तुः काशीराजस्य मूर्ता मूर्तिमती रतिः रतिदेवी एधि भव । अस्तेः सिपि हेर्धिरादेशे, "घ्वसोरेद्धा-वभ्यासलोपश्च" इत्येकारादेशः । सोऽयं राजा च तव मूर्तो मूर्तिमान् कुसुमायुधः काम एवास्तु । किञ्च युवां पुरा विराद्धं द्विष्टं गिरिशमीश्वरं आराद्धुं आराधयितुं

कामानुशासनशते सुतरामधीती
सोऽयं रहो नखपदैर्महतु स्तनौ ते ।
रुष्टाद्रिजाचरणकुङ्कुमपङ्कराग-
सङ्कीर्णशङ्करशशाङ्ककलाङ्ककारैः ॥ १२२ ॥

पृथ्वीश एष नुदतु त्वदनङ्गताप-
मालिङ्ग्य कीर्तिचयचामरचारुचापः ।
संग्रामसङ्गतिविरोधिशिरोधिदण्ड-
खण्डिक्षुरप्रसरसंप्रसरत्प्रतापः ॥ १२३ ॥

---

तत्र पुरि काश्यां कृतावतारौ अवतीर्णौ तौ रतिकामाविव विभातं विराजतं च । भातेर्लोटि थसस्तामादेशः ॥ १२१ ॥

**कामेति** ॥ कामानुशासनानां कामशास्त्राणां शते अधीतमनेनेत्यधीती, "इष्टादिभ्यश्च" इति इनिप्रत्यये, सप्तमीविधाने क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानमिति सप्तमी । सोऽयं राजा रहो रहसि रुष्टा कुपिता अद्रिजा पार्वती तस्याश्चरणकुङ्कुमपङ्करागेण सङ्कीर्णा प्रणामकाले रुषिता तया शङ्करशशाङ्ककलया अङ्ककारैः कलहकारिभिस्तदनुकारिभिरित्यर्थः । कर्मण्यण् । 'अङ्कः कलहचिह्नयोः' इति विश्वः । नखपदैस्ते स्तनौ महतु पूजयतु अलङ्करोत्वित्यर्थः । मह पूजायामिति धातोर्भौवादिकाल्लोट् ॥ १२२ ॥

**पृथ्वीश इति** ॥ कीर्तिचय एव चामरन्तेन चारुश्चापो यस्य सः चापलब्धकीर्तिरित्यर्थः । अत एव सङ्ग्रामे सङ्गतानां विरोधिनां रिपूणां शिरोधिदण्डान् कण्ठनालान् खण्डयन्तीति तेषां क्षुरप्राणां शरविशेषाणां सरेण प्रसरेण सम्प्रसरत्प्रतापः एष पृथ्वीशः आलिङ्ग्य तवानङ्गतापं नुदतु नयतु । समरसुरतयोः समरस इति भावः ॥ १२३ ॥

वक्षस्त्वदुग्रविरहादपि नास्य दीर्णं
वज्रायते पतनकुण्ठितशत्रुशस्त्रम् ।
तत्कन्दकन्दलतया भुजयोर्न तेजो-
वह्निर्नमत्यरिवधूनयनाम्बुनापि ॥ १२४ ॥

किं न द्रुमा जगति जाग्रति लक्षसंख्या-
स्तुल्योपनीतपिककाकफलोपभोगाः ।
स्तुत्यस्तु कल्पविटपी फलसंप्रदानं
कुर्वन् स एष विबुधानमृतैकवृत्तीन् ॥ १२५ ॥

---

**वक्ष इति** ॥ हे भैमि ! तवोग्राद्विरहादपि न दीर्णम् अविदीर्णं तथा पतनेन कुण्ठितानि प्रतिहतानि शत्रूणां शस्त्राण्यायुधानि येन तदस्य वक्षो वज्रायते वज्रमिवाचरति मृदूक्तिरियं वज्रमेवेत्यर्थः । अन्यथा कथमीदृगभेद्यत्व-मिति भावः । आचारक्यङन्ताल्लट् । तद्वज्रमेव कन्दो मूलं तत्कन्दलतया तत्प्ररोहत्वेन हृदयदार्ढ्यमूलत्वाद्भुजतेजस इति भावः । भुजयोस्तेजोवह्निः प्रता-पाग्निः अरिवधूनयनाम्बुनापि न नमति न शाम्यतीत्यर्थः । वज्राग्नेरबिन्धनत्वा-दिति भावः । अत्र भुजतेजसोऽनम्बुहार्यत्वेन वज्रायितवक्षः कार्यताद्वारादिव्य-तेजस्त्वोत्प्रेक्षणादुत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥ १२४ ॥

**किमिति** ॥ तुल्यं निर्विशेषं यथा तथोपनीतः सम्पादितः पिकानां काकानाञ्च फलोपभोगो यैस्ते पात्रापात्रतुल्यफलविनियोगा इत्यर्थः । लक्षसङ्ख्या असङ्ख्या द्रुमाः जगति न जाग्रति किम् ? न स्फुरन्ति किम् ? स्फुरन्त्येवेत्यर्थः । किन्त्वमृतैकवृत्तीन् सुधैकजीवनान् विबुधान् देवान् विदुषश्च फलसम्प्रदान-मीप्सितार्थप्रतिग्राहिणः कुर्वन् सर्वामरमनोरथपूरकः स एष कल्पविटपी कल्पवृक्षः स्तुत्यः स एक एव स्तोत्रार्हो नान्य इत्यर्थः । कल्पवृक्षकल्पोऽयं काशिराज इत्यर्थः । अत्राप्रस्तुतकल्पवृक्षकथनात्प्रस्तुतकाशिराजप्रतीतेरप्रस्तुतप्रशंसालङ्कारः । अप्रस्तुतस्य कथनात्प्रस्तुतं यत्र गम्यते । अप्रस्तुतप्रशंसेयं सारूप्यादिनियन्त्रि-तेति लक्षणात् ॥ १२५ ॥

अस्मै करं प्रवितरन्तु नृपा न कस्मा-
 दस्यैव तत्र यदभूत् प्रतिभूः कृपाणः ।
दैवाद्यदा प्रवितरन्ति न ते तदैव
 नेदं कृपा निजकृपाणकरग्रहाय ॥ १२६ ॥

एतद्बलैः क्षणिकतामपि भूखुराग्र-
 स्पर्शायुषां रयवशादसमापयद्भिः ।
दृक्पेयकेवलनभःक्रमणप्रवाहै-
 र्वाहैरलुप्यत सहस्रदृगर्वगर्वः ॥ १२७ ॥

---

**अस्मा इति** ॥ अस्मै राज्ञे नृपाः प्रतिनृपाः कस्मात्कारणात् करं बलिं न प्रवितरन्तु न दद्युः । सम्भावनायां लोट् । असम्भावितमेतदित्यर्थः । कुतः यद्यस्मात्तत्र करदाने अस्यैव कृपाणः खड्गः प्रतिभूर्लग्नकोऽभूत् । 'स्युर्लग्नकाः प्रतिभुवः' इत्यमरः । अत्र कृपाणस्य प्रतिभूत्वं व्यनक्ति यदा दैवात्ते नृपाः करं न प्रवितरन्ति तदैव निजकृपाणस्य करेण हस्तेन ग्रहाय ग्रहणाय अन्यत्र निजकृपाणात् प्रतिभूसकाशात् करस्य बलेर्ग्रहणाय आग्रहे सतीति शेषः । 'बलिहस्तांशवः कराः' इत्यमरः । अस्य कृपा इदंकृपा सा न । निष्कृपः कृपाणं प्रयुङ्क्त इत्यर्थः । कृपाणपातभीत्यैव करदानात्तस्य प्रातिभाव्यव्यपदेश इति भावः॥

**एतदिति** ॥ एतद्बलैः एतत्सैन्यैः रयवशाद्वेगवशाद्भुवः खुराग्राणाञ्च ये स्पर्शाः संयोगास्तेषां यान्यायूंषि जीवितानि तेषां क्षणिकतां क्षणमात्रावस्थायिता-मप्यसमापयद्भिः अनिवर्तयद्भिः क्षणिकत्वाददृश्यभूस्पर्शैरित्यर्थः । किन्तु दृक्पेया अविच्छिन्नतया दृष्टिग्राह्याः केवला नभःक्रमणप्रवाहाः नभोगतिपरम्परा येषां तैः केवलखेचरैरित्यर्थः । ईदृशैर्वाहैर्वाजिभिः सहस्रदृगर्वणः सहस्राक्षवाजिनः उच्चैः-श्रवसो गर्वः 'वाजिवाहार्वगन्धर्व' इत्यमरः । अलुप्यत लोपितः । सहस्राक्षस्य त्वेक एव खेचरोऽश्वः अस्य त्वेतादृशाः परःसहस्रा इति भावः ॥ १२७ ॥

तद्वर्णनासमय एव समेतलोक-
शोभावलोकनपरा तमसौ परासे
मानी तया गुणविदा यदनादृतोऽसौ
तद्भूभृतां सदसि दुर्यशसेव मम्लौ ॥ १२८ ॥

सानन्तानाप्य तेजःसखनिखिलमरुत्पार्थिवान्दिष्टभाज-
श्चित्तेनाशापुषस्तान् सममसमगुणान्मुञ्चती गूढभावा ।

---

तदिति ॥ असौ दमयन्ती तस्य काशिराजस्य वर्णनासमये स्तोत्रकाल एव समेतलोकानां मिलितजनानां शोभावलोकनपरा सती तं काशिराजं परासे व्याजेन परिजहारेत्यर्थः । उपसर्गादस्यत्यूह्योर्वा वचनमित्यस्यतेस्तङि लिट् । मानी अभिमानी असौ राजा गुणविदा गुणज्ञया तया भैम्या अनादृत इति यत् तत्तस्मादनादरणादेव भूभृतां राज्ञां सदसि दुर्यशसा दुष्कीर्त्येव मम्लौ वैवर्ण्यङ्गत इत्यर्थः ॥ १२८ ॥

सेति ॥ शुभाङ्गी सुगात्री अन्यत्र षडङ्गयुक्ता सा दमयन्ती अनन्ता-नपरिमितान् दिष्टमाजो भाग्यभाजः चित्तेनाशामभिलाषं पुष्णन्तीत्याशापुषः भैमीं कामयमानानित्यर्थः । तान् प्रसिद्धानसमगुणानसाधारणशौर्यादिगुणान् तेजसः सखायस्तेजःसखास्तेजस्विन इत्यर्थः । राजाहस्सखिभ्यष्टच् । ते निखिला मरुतो देवा इन्द्रादयः पार्थिवाश्च तानाप्य प्राप्य समं युगपन्मुञ्चती परिहरन्ती उपनिषत्पक्षे तु सानन्तानाकाशसहितान् । 'अनन्तं सुरवर्त्म खम्' इत्यमरः । दिष्टभाजः कालयुक्तान् । 'दिष्टं भाग्ये च काले च' इति विश्वः । चित्तेन समं मनसा सह आशापुषो दिग्युक्तान् । 'आशा दिगतितृष्णयोः' इति वैजयन्ती । असमगुणान् न्यूनाधिकसङ्ख्यातरूपरसादिगुणकान् अपां विकारः आप्यम् । 'द्वे आप्यमम्मयम्' इत्यमरः । "आप्यञ्च" इति चान्द्रसूत्रनिपातनात्साधुः । तेजःसखाः तेजोद्रव्यसहिताः । मरुद्वायुः । 'मरुतौ पवनामरौ' इत्यमरः । पार्थिवा पृथिवीविकाराः । अत्राप्यपार्थिवशब्दौ तद्धितावपि प्रकरणात्प्रकृत्यर्थ-

पारेवाग्वर्तिरूपं पुरुषमनु चिदम्भोधिमेकं शुभाङ्गी
निःसीमानन्दमासीदुपनिषदुपमा तत्परीभूय भूयः ॥१२९

श्रीहर्षं कविराजराजिमकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
शृङ्गारामृतशीतगावयमगादेकादशस्तन्महा-
काव्येऽस्मिन् निषधेश्वरस्य चरिते सर्गो निसर्गोज्ज्वलः ॥

---

मात्रपरौ द्रष्टव्यौ । तान् मुञ्चती तार्किकोक्तपृथिव्यादिनवद्रव्येष्वात्मातिरिक्त-द्रव्याष्टकस्य श्रुतिवाक्यैर्निषेधं कुर्वतीत्यर्थः । गूढभावा निगूढाभिप्राया पारे वाचां पारेवाक् । "पारे मध्ये षष्ठ्या वा" इत्यव्ययीभावः । तद्वर्ति रूपं सौन्दर्यं यस्य तम् अन्यत्र यतोवाच इत्यादि श्रुतेः । वाङ्मनसातीतं चिदम्भोधिं ज्ञाना-करम् अन्यत्र चिद्रूपम् । एकमद्वितीयं निःसीमा आनन्दो यस्येति बहुव्रीहिः । अन्यत्र कर्मधारयः । तं पुरुषं पुमांसं परमात्मानञ्च अनु तं लक्षयित्वा तं प्रतीत्यर्थः । अनुर्लक्षण इति कर्मप्रवचनीयत्वात् द्वितीया । भूयो भूयिष्ठम् । तत्परा आसक्ता तात्पर्ययुक्ता च भूत्वा तत्परीभूय उपनिषद्वेदान्तवाक्यं उपमानं यस्याः तदुपमा तत्कल्पा आसीदिति श्लिष्टविशेषणेयमुपमाश्लेष एवेति केचित् । स्रग्धरा वृत्तम् ॥ १२९ ॥

**श्रीहर्षमित्यादि** ॥ शृङ्गार एवामृतं तस्य शीतगौ चन्द्रे शीता गावः किरणा यस्य सः शीतगुः तस्मिन् गोस्त्रियोरुपसर्जनस्येति ओकारह्रस्वः ॥ १३० ॥

इति पदवाक्यप्रमाणपारावारपारीणश्रीमहामहोपाध्यायकोलाचल-
मल्लिनाथसूरिविरचिते नैषधव्याख्याने जीवातुसमाख्याने
एकादशः सर्गः समाप्तः ।

# द्वादशः सर्गः ।

प्रियाह्रियालम्ब्य विलम्बमाविला
विलासिनः कुण्डिनमण्डनायितम् ।
समाजमाजग्मुरथो रथोत्तमा-
स्तमासमुद्रादपरे परे नृपाः ॥ १ ॥

ततः स भैम्या ववृते वृते नृपैर्विनिःश्वसद्भिः सदसि स्वयम्वरः ।
चिरागतैस्तर्कितताद्विरागितैः स्फुरद्भिरानन्दमहार्णवैर्नवैः ॥ २ ॥

---

अथास्मिन्नवसरे पुनरन्ये राजानः समायाता इत्याह—**प्रियेति** ॥ अथो अनन्तरम् । 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः । प्रियासु स्वकान्तासु विषये ह्रिया सङ्कोचेन दाक्षिण्येनेति यावत् । विलम्बं आलम्ब्य आविलाः दमयन्तीस्वयम्वरश्रवणादाकुलाः विलासिनो विलसनशीलाः, "वीकष-लसकत्थस्रम्भ" इति घिणुन्प्रत्ययः । रथैरुत्तमाः रथोत्तमाः महारथाः परे श्रेष्ठाः अपरे अन्ये नृपाः आसमुद्रात् समुद्रपर्यन्तादपादानात् कुण्डिनस्य कुण्डिन-नामनगरस्य मण्डनायितं अलङ्कारभूतं, मण्डनशब्दादाचारक्यङन्तात् कर्तरि क्तः। तं समाजं राजसभामाजग्मुः प्रापुः । अत्र विलाविलेत्यादौ नियमेनासकृद्व्यञ्जन-युग्मावृत्त्या च्छेकानुप्रासः । अन्यत्रानियमाद्वृत्त्यनुप्रास इत्युभयोः संसृष्टिः । सङ्ख्यानियमे पूर्वं च्छेकानुप्रासः अन्यो वृत्त्यनुप्रास इति लक्षणात् ॥ १ ॥

**तत इति** ॥ ततो राजान्तरागमनानन्तरं तर्किता तद्विरागिता भैमी-वैराग्यं यैस्तैर्निश्चितभैम्यपरागैः अत एव विषादात् विनिःश्वसद्भिश्चिरागतैः पूर्वा-गतैर्नृपैस्तथा स्फुरद्भिः प्रकाशमानैरानन्दमहार्णवैर्दमयन्तीप्राप्त्याशया परमानन्द-भरितैर्नवैश्च नृपैर्वृते सदसि सः प्रकृतः भैम्याः स्वयम्वरः ववृते प्रवृत्तः ॥ २ ॥

चलत्पदस्तत्पदयन्त्रणेङ्गितस्फुटाशयामासयति स्म राजके ।
श्रमं गता यानगतावपीयमित्युदीर्य धुर्यः कपटाज्जनीञ्जनः ॥ ३ ॥

नृपानुपक्रम्य विभूषितासनान् सनातनी सा सुषुवे सरस्वती ।
विगाहमारभ्य सरस्वतीः सुधासरःस्वतीवार्द्रतनूरनूत्थिताः ॥ ४ ॥

वृणीष्व वर्णेन सुवर्णकेतकीप्रसूनपर्णादृतुपर्णमादृतम् ।
निजामयोध्यामपि पावनीमयं भवन्मयो ध्यायति नावनीपतिः ॥

---

**चलदिति** ॥ चलत्पदः चलत्पादः क्वचित् स्थितिकालेऽप्युत्तमाश्ववदेकत्रानवस्थितचरण इति भारवाहिस्वभावोक्तिः । धुरं वहतीति धुर्यो जनो यानिजनः, धुरो यड्ढकाविति यत्प्रत्ययः । तस्याः भैम्याः पदयन्त्रणेङ्गितेन पादनोदनचेष्टितेन स्फुटः आशय उपवेशनाभिप्रायो यस्यास्तां जनीं वधूं, 'जनी सीमन्तिनी वध्वोः' इति विश्वः । इयं बाला यानेन गतावपि श्रमं गता श्रान्तेत्युदीर्य कपटात् श्रमव्याजात् राजके राजसमूहे आसयति स्म उपवेशयामास ॥ ३ ॥

**नृपानिति** ॥ सनाभवा सनातनी सनाशब्दात्सायंचिरमित्यादिना ट्युल्प्रत्यये ङीप् । सा सरस्वती वाग्देवता विभूषितासनान् अलङ्कृतसिंहासनानुपविष्टानित्यर्थः । नृपानुपक्रम्य सुधासरःस्वमृतसरसीषु विगाहमारभ्यावगाहं प्राप्य अन्वनन्तरमुत्थिता निर्गताः अतीवार्द्रतनूरमृतार्द्रसर्वाङ्गाः तद्वदमृतवर्षिणीरित्यर्थः। सरस्वतीर्गिरः सुषुवे जनयामास ॥ ४ ॥

**वृणीष्वेति** ॥ वर्णेनाङ्गकान्त्या सुवर्णकेतकीप्रसूनस्य पर्णाद्दलादादृतं ततोऽप्यधिकस्पृहणीयं, "पञ्चमी विभक्ते" इति पञ्चमी । ऋतुपर्णं ऋतुपर्णाख्यं नृपं वृणीष्व भवत्येव भवन्मयस्त्वदात्मकः, स्वार्थे मयट्प्रत्ययः । सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः अयमवनीपतिः पावनीं पवित्रकरणीं निजामयोध्यां अयोध्यानगरीमपि न ध्यायति न चिन्तयति ॥ ५ ॥

न पीयतां नाम चकोरजिह्वया कथञ्चिदेतन्मुखचन्द्रचन्द्रिका ।
इमां किमाचामयसे न चक्षुषी चिरं चकोरस्य भवन्मुखस्पृशी ॥

अपां विहारे तव हारविभ्रमं करोतु नीरे पृषदुत्करस्तरन् ।
कठोरपीनोच्चकुचद्वयीतटे त्रुटत्तरः सारवसारवोर्मिजः ॥ ७ ॥

अखानि सिन्धुः समपूरि गङ्गया कुले किलास्य प्रसभं स भंत्स्यते ।
विलङ्घ्यते चास्य यशःशतैरहो सतां महत्सन्मुखधावि पौरुषम् ॥

**नेति** ॥ एतन्मुखचन्द्रचन्द्रिका चकोरस्य जिह्वया कथञ्चिदपि न पीयतां नाम पाययितुमशक्यत्वादिति भावः । तथापि भवन्मुखस्पृशी भवन्मुखवर्तिनी त्वच्चक्षुरात्मना परिणते इत्यर्थः । स्पृशोऽनुदके क्विन् । चकोरस्य चक्षुषी कर्मणी इमामेतन्मुखचन्द्रिकां किं चिरन्नाचामयसे न पाययसे जिह्वया । चक्षुषा च किमिति न पीयते किमित्येनं न पश्यसीत्यर्थः । चमेः प्रत्यवसानार्थत्वात् "गतिबुद्धि" इत्यादिना चक्षुषोरणिकर्तुः कर्मत्वम् । "निगरणचलनार्थेभ्यश्च" इति चमेर्णिचि परस्मैपदनियमादात्मनेपदं चिन्त्यम् । अत्र भवन्मुखस्पृशोश्चकोरचक्षुषोरिति विषयनिगरणेन भैमीचकोरचक्षुषोरभेदप्रतीतेः भेदेऽभेदलक्षणादतिशयोक्तिरलङ्कारः ॥ ६ ॥

**अपामिति** ॥ हे भैमि ! तवापां विहारे जलक्रीडायां नीरे जले तरन् प्लवमानः त्रुटत्तरोऽत्यन्तं त्रुटन्नतिझर्झरः सारवेष्वारवसहितेषु सारवेषु सरयूभवेषूर्मिषु जातः देविकायां सरय्वाञ्च, 'भवे दाविकसारवौ' इत्यमरः । "दाण्डिनायन" इत्यादिना निपातनात्साधुः । पृषदुत्करो बिन्दुसन्दोहः कठोरे कठिने पीने पीवरे उच्चे उन्नते कुचद्वयीतटे हारविभ्रमं छिदुरमुक्ताहारभ्रान्तिं करोतु इति भ्रान्तिमदलङ्कारः ॥ ७ ॥

**अखानीति** ॥ अस्य ऋतुपर्णस्य कुले किल सिन्धुरुदधिरखानि खातः । खनतेः कर्मणि लुङ् । एतत्कुल्यैः सगरसुतैः उत्पादित इत्यर्थः । स सागरो गङ्गया भागीरथ्या समपूरि पूरित एतत्कुल्येनैव भगीरथेनेति शेषः । स सिन्धुः प्रसभं बलात्कारेण भन्त्स्यते एतत्कुल्येनैव रामेण बद्धः करिष्यते । बन्धेः कर्मणि

एतद्यशःक्षीरधिपूरगाहि पतत्यगाधे वचनं कवीनाम् ।
एतद्गुणानां गणनाङ्कपातः प्रत्यर्थिकीर्तीः खटिकाः क्षिणोति ॥ ९ ॥

भास्वद्वंशकरीरतां दधदयं वीरः कथं कथ्यता-
मध्युष्टापि हि कोटिरस्य समरे रोमाणि सत्त्वाङ्कुराः ।
नीतः संयति वन्दिभिः श्रुतिपथं यन्नामवर्णावली-
मन्त्रः स्तम्भयति प्रतिक्षितिभृतां दोस्तम्भकुम्भीनसान् ॥

---

लृट् । कृतयुगापेक्षया त्रेतायाः भावित्वात् भविष्यत्प्रयोगः । अस्य ऋतुपर्णस्य यशः शतैर्विलङ्घ्यते च । तथा हि सतां सज्जनानां महत्पौरुषं सम्मुखं धावतीति सम्मुखधावि महतामेवंविधपुरुषकारः स्वयमेवाभिमुखामायाति न प्रयाससाध्य इत्यर्थः । अहो! ॥ ८ ॥

**एतदिति** ॥ एतस्य राज्ञः यश एव क्षीरधिः क्षीराब्धिः तस्य पूरं प्रवाहं गाहत इति तद्गाहि तद्वर्णनप्रवृत्तमित्यर्थः । कवीनां वचनमगाधे गम्भीरे पतति मज्जति न तु निःशेषं वर्णयितुं शक्नोतीत्यर्थः । किञ्च एतद्गुणानां गणनाङ्क-पातः सङ्ख्यानरेखाविन्यासः प्रत्यर्थिकीर्तिरेव खटिकाः लेखनकनिकाः क्षिणोति कर्शयति एतद्गुणवृद्धेः प्रत्यर्थिकीर्तितिरोधायकत्वादित्थं निर्देशः ॥ ९ ॥

**भास्वदिति** ॥ भास्वद्वंशकरीरतां सूर्यकुलाङ्कुरत्वं उज्वलवेण्वङ्कुरत्वञ्च दधत् । 'वंशाङ्कुरे करीरोऽस्त्री, द्वौ वंशौ कुलमस्करौ' इति चामरः । वीरः शूरोऽयमृतुपर्णः कथं कथ्यतां कथयितुमशक्य इत्यर्थः । तथा हि अस्य राज्ञः समरे प्रसक्ते अध्युष्टा आधिक्यविशिष्टा, कोटिः परकोटिरित्यर्थः । "तिस्रः कोट्योऽर्धकोटी च यानि रोमाणि मानवे" इत्यादि स्मरणात् । विंशत्याद्याः सदैकत्वे, सङ्ख्याः सङ्ख्येयसङ्ख्ययोरिति सङ्ख्येयेऽप्येकवचनम् । रोमाणि सत्त्वं व्यवसाय उत्साहो वीरस्य स्थायीभावस्तस्याङ्कुरा बहिरुद्गताः वीररसाङ्कुरा एवे-त्युत्प्रेक्षा । 'द्रव्यासु व्यवसायेषु सत्वमस्त्री तु जन्तुषु' इत्यमरः । वंशकरीरस्य समन्तायवाङ्कुरप्रादुर्भावो युक्त इत्यर्थः । अत एव सम्प्रति युद्धे बन्दिभिर्वैता-

ताद्दग्दीर्घविरिञ्चिवासरविधौ जानामि यत्कर्तृतां
शङ्के यत्प्रतिविम्बमम्बुधिपयःपूरोदरे बाडबः ।
व्योमव्यापिविपक्षराजकयशस्ताराः पराभावुकः
कासामस्य न स प्रतापतपनः पारङ्गिरां गाहते ॥ ११ ॥

द्वेष्याकीर्तिकलिन्दशैलसुतया नद्यास्य यद्दोर्द्वयी-
कीर्तिश्रेणिमयी समागममगाद्गङ्गा रणप्राङ्गणे ।

---

लिकैः श्रुतिपथं कर्णपथं नीतः श्रावित इत्यर्थः । यस्य ऋतुपर्णस्य नामवर्णावली नामाक्षरपङ्क्तिरेव मन्त्रः प्रति क्षितिभृतान्दोःस्तम्भा एव कुम्भीनसाः सर्पाः तान् 'कुम्भीनसो लेलिहानः' इत्यमरः । 'कुम्भीनसो लेहिताहिः' इति वैजयन्ती । स्तम्भयति प्रतिबध्नाति ॥ १० ॥

**ताद्दगिति** ॥ ताद्दग्दीर्घस्य "चतुर्युगसहस्रन्तु ब्रह्मणो दिनमुच्यते" इत्युक्तमहापरिमाणस्य विरिञ्चेः ब्रह्मणो वासरस्य विधौ विधाने यस्य प्रतापतपनस्य कर्तृता, न तु प्रसिद्धतपनस्येत्यर्थः । कल्पान्तावस्थायी यस्य प्रताप इति भावः । तां जानामीत्युत्प्रेक्षायाम् । अम्बुधिपयःपूरस्योदरे अभ्यन्तरे बाडवो बडवानलो यस्य प्रतापतपनस्य प्रतिविम्बमेव शङ्क इत्युत्प्रेक्षायाम् । व्योमव्यापिन्यो याः विपक्षस्य विरोधिनो राजकस्य राजसमूहस्य यशांस्येव तारा नक्षत्राणि ताः पराभावुकः परिभविता, लषपतेत्यादिना उकञ्प्रत्यये न लोकेत्यादिना षष्ठीप्रतिषेधात्कर्मणि द्वितीया । सर्वव्यापी अस्य राज्ञः प्रताप एव तपनः कासाङ्गिरां पारं परभागं न गाहते सर्वासामपि गाहते न कासामपि गोचर इत्यर्थः ॥ ११ ॥

**द्वेष्येति** ॥ यद्यस्मादस्य राज्ञो दोर्द्वयी कीर्तिश्रेणिमयी भुजयुग यशःपरम्परारूपा गङ्गा भागीरथी रणप्राङ्गणे द्वेष्याणां द्विषामकीर्तिरधर्म इति तद्विरुद्धार्थत्वादपकीर्तिः सैव कलिन्दतनया कालिन्दी तया नद्या समागममगात् । तत्तस्मात्तस्मिन् गङ्गायमुनासङ्गमे विनिमज्ज्य बाहुजभटैः क्षत्रियभटैः । 'बाहुजः

तत्तस्मिन्विनिमज्य बाहुजभटैरारम्भि रम्भापरी-
रम्भानन्दनिकेतनन्दनवनक्रीडादराडम्बरः ॥ १२ ॥

इति श्रुतिस्वादिततद्गुणस्तुतिः सरस्वतीवाङ्मयविस्मयोत्थया ।
शिरस्तिरःकम्पनयैव भीमजा न तं मनोरन्वयमन्वमन्यत ॥१३॥

युवान्तरं सा वचसामधीश्वरा स्वरामृतन्यक्कृतमत्तकोकिला ।
शशंस संसक्तकरैव तद्दिशा निशाकरज्ञातिमुखीमिमां प्रति ॥१४॥

---

क्षत्रियो विराट्' इत्यमरः । रम्भायाः परीरम्भानन्दं आनन्दसुख, उपसर्गस्य घञ्यमनुष्ये बहुलमिति दीर्घः । तस्य निकेते स्थाने नन्दनवने क्रीडादराडम्बरो विहारेच्छाविजृम्भणमारम्भि आरब्धः । "रभेरशब्लिटोः" इति नुमागमः । एतद्विरोधिनां मरणमेव शरणमिति भावः । अत्र कीर्त्यपकीर्त्योर्गङ्गायमुनारोपाद्रूपकालङ्कारः "सितासिते सरितौ यत्र सङ्गते तत्राप्लुतासो दिवमुत्पतन्ति । ये वैतन्वां विसृजन्ति धीरास्ते जनासो अमृतत्वं भजन्ते" इति श्रुतिरत्र प्रमाणम् ॥

इतीति ॥ भीमजा भैमी दमयन्ती इतीत्थं श्रुतिस्वादिता श्रोत्रगृहीता तस्यर्तुपर्णस्य गुणानां स्तुतिः यया सा सती सरस्वत्या देव्या वाङ्मये वाग्जाले विषये यो विस्मयः तदुत्थया शिरसस्तिरःकम्पनयैव मनोरन्वयं मनुसन्तानं तमृतुपर्णं नान्वमन्यत न्यषेधीत् इत्यर्थः । विस्मयाभिनयशिरःकम्पनयैव प्रसङ्गान्निषेधार्थोऽपि संवृत्त इति भावः ॥ १३ ॥

युवेति ॥ स्वर एवामृतं तेन न्यक्कृतमत्तकोकिला सा वचसामधीश्वरा वाग्देवता अन्यं युवानं युवान्तरम् । सुप्सुपेति समासः । तस्य यूनो दिशा दिग्भागेन संसक्तकरा प्रसारितहस्तैव सती, हस्तेन तं निर्दिशन्त्येवेत्यर्थः । निशापतिज्ञातिमुखीं तत्सदृशमुखीमित्यर्थः । ज्ञातिसोदरबन्ध्वादिशब्दाः सादृश्यवाचका इत्याहुः । इमां भैमीं प्रति शशंस, तामामन्त्र्याचख्यावित्यर्थः ॥ १४ ॥

न पाण्ड्यभूमण्डनमेणलोचने ! विलोचनेनापि नृपं पिपाससि ।
शशिप्रकाशाननमेनमीक्षितुं तरङ्गयाऽपाङ्गदिशा दृशस्त्विषः ॥१५॥

भुवि भ्रमित्वाऽनवलम्बमम्बरे विहर्तुमभ्यासपरम्परापरा ।
अहो ! महावंशममुं समाश्रिता सकौतुकं नृत्यति कीर्तिनर्तकी ॥

इतो भिया भूपतिभिर्वनं वना-
दटद्भिरुच्चैरटवीत्वमीयुषी ।
निजापि साऽवापि चिरात्पुनःपुरी
पुनः स्वमध्यासि विलासमन्दिरम् ॥ १७ ॥

---

**नेति** ॥ हे एणलोचने! मृगाक्षि ! पाण्ड्यानां भूमण्डनं चूडामणिं तेषु श्रेष्ठं नृपं विलोचनेनापि न पिपाससि पातुं नेच्छासि मुखेन तु कुत इति भावः । किन्तु शशिप्रकाशाननमिन्दुसुन्दराख्यं एनमीक्षितुमपाङ्गदिशा कटाक्षमार्गेणापि दृशस्त्विषो दृक्कान्तीस्तरङ्गय प्रवर्तय ॥ १५ ॥

**भुवीति** ॥ कीर्तिरेव नर्तकी लासिकी शिल्पिनि ष्वुन् इत्यत्र नृतिखनिरञ्जीनां परिगणानान्नृत्यतेः ष्वुन्प्रत्ययः । "षिद्गौरादिभ्यश्च" इति ङीप् । भुवि भूतले भ्रमित्वा भूचारीः कृत्वेत्यर्थः । अथाम्बरे अनवलम्बमनवष्टम्भं विहर्तुं नर्तितुमभ्यासानां परम्परा परं प्रधानं यस्याः सा सती, अम्बरचारीरभ्यस्येत्यर्थः । महावंशं महाकुलीनं महावेणुञ्च, 'वंशो वेणौ कुले वर्गे' इति विश्वः । अमुं पाण्ड्यमाश्रिता सती सकौतुकं नृत्यति । अहो ! रूपकालङ्कारः ॥

**इत इति** ॥ इतोऽस्माद्भिया वनाद्वनमटद्भिः भ्रमद्भिः प्रतिभूपैः उच्चैरटवीत्वं कालवशान्महाटवीत्वमीयुषी प्राप्ता सा पूर्वानुभूता निजा स्वीया पुर्यपि चिरात् पुनरवापि प्राप्ता स्वं स्वकीयं विलासमन्दिरं क्रीडागृहञ्च पुनरध्यासि अध्यासितम् । आसेरधिपूर्वात् कर्मणि लुङ् । बवयोरभेदः । विलेष्वासत इति विलासा विलेशयास्तेषां मन्दिरमिति विशेषणत्वेनापि योज्यम् । अत्रैकस्यारि-

आसीदासीमभूमीवलयमलयजालेपनेपथ्यकीर्तिः
सप्ताकूपारपारीसदनजनघनोद्गीतचापप्रतापः ।
वीरादस्मात्परः कः पदयुगयुगपत्पातिभूपातिभूय-
श्चूडारत्नोडुपत्नीकरपरिचरणामन्दनन्दन्नखेन्दुः ॥ १८ ॥

भङ्गाकीर्तिमषीमलीमसतया प्रत्यर्थिसेनाभट-
श्रेणीतिन्दुककाननेषु विलसत्यस्य प्रतापानलः ।
अस्मादुत्पतिताः स्फुरन्ति जगदुत्सङ्गे स्फुलिङ्गाः स्फुटं
भालोद्भूतभवाक्षिभानुहुतभुग्जम्भारिदम्भोलयः ॥ १९ ॥

---

वर्गस्य क्रमादनेकास्वटवीष्वटवीभूतपुरीषु च वृत्तेन तथा पुरीष्वपि पुरीत्वाटवीत्वयोः क्रमसम्बन्धोक्त्या च एकमनेकस्मिन्ननेकमेकस्मिन्वा क्रमेण पर्याय इत्युक्तलक्षणं पर्यायभेदद्वयं द्रष्टव्यम् ॥ १७ ॥

**आसीदिति** ॥ वीरादस्मात्पाण्ड्यात् परोऽन्यः को वीर आसीमा सीमान्तात्, अभिविधावव्ययीभावः । भूमीवलयस्य मलयजालेपनेपथ्यं चन्दनचर्चा प्रसाधनभूता कीर्तिर्यस्य सः सप्तानामकूपारपाराणां समुद्रपरतीराणां समाहारः सप्ताकूपारपारी । "तद्धितार्थ" इत्यादिना समाहारद्विगौ ङीप् । 'समुद्रोऽब्धिरकूपारः' इत्यमरः । सैव सदनं येषां तैस्तत्रस्थैर्जनैः घनं निरन्तरमुद्गीतश्चापप्रतापो यस्य सः पदयुगे युगपत्पातिनां भूपानामतिभूयांसि अधिकप्रचुराणि चूडारत्नान्येवोडवस्तासामेव पत्नीनां करा अंशवो हस्ताश्च, 'वलिहस्तांशवः कराः' इत्यमरः ! तेषां परिचरणेन परामर्शेनामन्दमतिमात्रं नन्दन्तः उल्लसन्तः नखा एवेन्दवो यस्य स आसीत्, दिगन्तविश्रान्तप्रतापः समस्तराजवन्द्यश्चायमेव नान्यः कश्चिदित्यर्थः ॥ १८ ॥

**भङ्गेति** ॥ अस्य पाण्ड्यस्य प्रताप एवानलः भङ्गेन पराजयेन या अकीर्तिः सैव मषी तया मलिमसतया प्रत्यर्थिसेनाभटश्रेण्य एव तिन्दुककाननानि कालस्कन्धवनानि । 'तिन्दुकः स्फुर्जकः कालस्कन्धश्च शितिसारकः' इत्यमरः ।

एतद्दन्तिबलैर्विलोक्य निखिलामालिङ्गिताङ्गीं भुवं
सङ्ग्रामाङ्गणसीम्नि जङ्गमगिरिस्तोमभ्रमाधायिभिः ।
पृथ्वीन्द्रः पृथुरेतदुग्रसमरप्रेक्षोपनम्रामर-
श्रेणीमध्यचरः पुनःक्षितिधरक्षेपाय धत्ते धियम् ॥ २० ॥

शशंस दासीङ्गितविद्विदर्भजामितो ननु स्वामिनि ! पश्य कौतुकम् ।
यदेष सौधाग्रतटे पटाञ्चले चलेऽपि काकस्य पदार्पणग्रहः ॥२१॥

---

तेषु विलसति प्रज्वलति भालोद्भूतभवाक्षि हरनिटलनेत्रन्तच्च भानुश्च सूर्यश्च हुतभुगग्निश्च जम्भारिदम्भोलिः कुलिशश्च ते अस्मात्तिन्दुकाग्नेः उत्पतिता उत्थिताः स्फुलिङ्गाः अग्निकणाः जगदुत्सङ्गे जगदुपरि स्फुरन्ति स्फुटं असंशय-मित्युत्प्रेक्षा रूपकसङ्कीर्णा । तिन्दुककाष्ठेभ्यो दह्यमानेभ्यो महान्तः स्फुलिङ्गाश्च टचटाशब्दं कुर्वन्तः उत्तिष्ठन्तीति प्रसिद्धम् ॥ १९ ॥

**एतदिति** ॥ एतस्य पाण्ड्यस्योग्रस्य भयङ्करस्य समरस्य प्रेक्षायै प्रेक्षणाय । गुरोश्च हल इति स्त्रियामप्रत्यये टिप् । उपनम्राणामुपगतानां अमराणां श्रेण्यां मध्ये चरतीति तथोक्तः स्वयमपि तद्द्रष्टुमागत इत्यर्थः । पृथुर्वैन्यनाम पृथ्वीन्द्रः सङ्ग्रामाङ्गणसीम्नि रणाजिरभूमौ जङ्गमाः सञ्चारिणो गिरीणां स्तोमाः समूहा इति भ्रममादधत इति तैस्तथोक्तैस्तथाभ्रान्तिजनकैरित्यर्थः । अत एव भ्रान्तिमदलङ्कारः । एतस्य पाण्ड्यस्य दन्तिबलैर्गजघटाभिः आलिङ्गिताङ्गी-माक्रान्तस्वरूपां निखिलां भुवं विलोक्य पुनः क्षितिधराणां क्षेपाय धनुषा प्रोत्सारणाय धियं धत्ते नूनमिति शेषः । अतो गम्योत्प्रेक्षा पूर्वोक्तभ्रान्तिमद-लङ्कारोत्थितेति सङ्करः । तेनैतत्सेनागजाः गिरिसमानसङ्ख्यापरिमाणा इति गम्यते । अत्र पराशरः—तत उत्सारयामास शैलान् शतसहस्रशः । धनुष्कोट्या तथा वैण्यस्तेन शैलाविवर्जिता ॥ इति ॥ २० ॥

**शशंसेति** ॥ इङ्गितवत् त्वराभिज्ञा दासी किङ्करी विदर्भजां भैमीं शशंस बभाण । किमिति ननु हे स्वामिनि ! इतोऽत्र कौतुकं विनोदं पश्य । किं तत् ?

ततस्तदप्रस्तुतभाषितोत्थितैः सदस्तदश्वेति हसैः सदःसदाम् ।
स्फुटाऽजनि म्लानिरतोऽस्य भूपतेः सिते हि जायेत शितेःसुलक्षता ॥

ततोऽनु देव्या जगदे महेन्द्रभूपुरन्दरे सा जगदेकवन्द्यया ।
तदार्जवावर्जिततर्जनीकया जनी कयाचित्परचित्स्वरूपया ॥ २३ ॥

स्वयम्वरोद्वाहमहे वृणीष्व हे! महेन्द्रशैलस्य महेन्द्रमागतम् ।
कलिङ्गजानां स्वकुचद्वयश्रिया कलिङ्गजानां शृणु तत्र कुम्भयोः २४

---

तदाह—सौधाग्रे नटे नर्तके अत एव चले चञ्चलेऽपि पटाञ्चले ध्वजपटाग्रे काकस्यैष पदार्पणग्रहः पादन्यासाभिनिवेश इति यत् तत्कौतुकमिति पूर्वेणान्वयः। एतेन भैम्यास्तस्मिन् पाण्ड्ये महाननादरः सूचितः ॥ २१ ॥

**तत इति** ॥ ततोऽनन्तरं तस्या अप्रस्तुतभाषितेनोत्थितैः सदःसदां सभासदां हसैर्हासैः । "स्वनहसोर्वा" इति विकल्पादप्रत्ययः । तत्सदः संसदश्वेति धवलितं, श्वितिधातोर्ण्यन्तात्कर्मणि लुङ् । अतः सदःश्वैत्याद्धेतोरस्य पाण्ड्यस्य भूपतेः म्लानिः विवर्णता स्फुटा व्यक्ता अजनि जाता । जनेः कर्तरि लुङ् । दीपजनेत्यादिना कर्तरि विकल्पाच्चिण् प्रत्ययः । तथाहि सिते धवलिम्नि शितेर्नीलिम्नः असितं, 'शिति कृष्णे च कालं नीलञ्च मेचकम्' इति हलायुधः । सुलक्षता सुग्रहत्वं जायेत हि स्फुटं दृश्यत इत्यर्थः । अर्थान्तरन्यासः ॥ २२ ॥

**ततोऽन्विति** ॥ ततोऽनु तदनन्तरं महेन्द्रभूपुरन्दरे महेन्द्रपर्वताधीश्वरे विषये तं लक्षीकृत्वेत्यर्थः । तदार्जवेन तत्प्रावण्येनावर्जिता नमिता तर्जनी प्रदेशिनी यया तया तादृक्तर्जनिकया तमङ्गुल्या निर्दिश्येत्यर्थः । "नद्यृतश्च" इति कप् । कयाचिदनिर्वाच्यया परचित्स्वरूपया परज्योतिरात्मिकया जगदेकवन्द्यया देव्या सरस्वत्या सा जनी वधूर्जगदे गदिता ॥ २३ ॥

**स्वयम्वरे इति** ॥ हे इति सम्बोधने । अथ सम्बोधनार्थकाः—'स्युः प्याटपाडङ्ग हे है भो' इत्यमरः । हे भैमि! स्वयम्वरेण स्वयम्वरकर्मणा य उद्वाहमहो विवाहोत्सवस्तस्मिन्नागतं महेन्द्रशैलस्य महेन्द्रमधीशं वृणीष्व । तत्र

अयं किलायात इतीरिपौरवाग्भयादयादस्य रिपुर्वृथा वनम् ।
श्रुतस्तदुत्स्वापगिरस्तदक्षराः पठद्भिरत्रासि शुकैर्वनेऽपि सः ॥२५॥

इतस्त्रसद्विद्रुतभूभृदुज्झिता प्रियाऽथ दृष्टा वनमानवीजनैः ।
शशंस पृष्टाद्भुतमात्मदेवजं शशित्विषः शीतलशीलतां किल ॥ २६

---

महेन्द्रशैले कलिङ्गजानां कलिङ्गदेशोद्भवानां गजानां कुम्भयोः स्वस्य ते कुचद्वय-श्रिया सह कलिं कलहं शृणु । तद्देशस्य गजप्रायत्वात् त्वत्कुचकुम्भयोः करि-कुम्भयोश्च साम्यं व्यक्तीभविष्यतीति भावः ॥ २४ ॥

**अयमिति** ॥ अयं महेन्द्रनाथ आयातः किल इतीरिणामितिवादिनां पौराणां वाग्भ्यो जनवादेभ्यः भयादस्य रिपुर्वृथा वनमयात् । वृथात्वमेवाह—श्रुता आकर्णितास्तान्येवाक्षराणि अयमायातः किलेत्येवंरूपाणि यासु तास्तदक्षराः तेषां पौराणां उत्स्वापगिरो वासनायातानुत्स्वापयितप्रलापान् पठद्भिरुच्चारयद्भिः शुकैर्वने विपिनेऽपि सः रिपुरत्रासि त्रासितः । त्रसेर्ण्यन्तात्कर्मणि लुङ् । अत्र सत्यपि त्रासनिवृत्तिकारणे त्रासकारणशुकवाक्यनिमित्तेन तदनुत्पत्तेरुक्तनिमित्त-रूपो विशेषोक्तिभेदोऽलङ्कारः । कारणसामग्र्यां कार्यानुत्पत्तिर्विशेषोक्तिरिति सामान्यलक्षणात् ॥ २५ ॥

**इत इति** ॥ इतोऽस्मात् महेन्द्रनाथात् त्रसता बिभ्यता, अत एव विद्रुतेन पलायितेन भूभृता प्रतिभूभुजोज्झिता वने त्यक्ता प्रिया तत्कान्ता वनमानवीजनैः किरातीजनैः दृष्टा । अथ दर्शनानन्तरमात्मदेशजं त्वद्देशे किमद्भुतमस्ति ? इति पृष्टा सती । अप्रधाने दुहादीनामित्यत्र प्रधाने कर्मणि क्तः । शशित्विषश्चन्द्रिकायाः शीतलशीलतां शिशिरस्वभावतां शशंस किल ? कथयामास खलु ? इदं पूर्वविरहाया मुग्धायाश्चन्द्रकिरणानां विरहे दुःसहत्व-मजानन्त्यास्तत्र शीतलत्वमत्रोष्णत्वमिति भ्रान्तिरिति भावः ॥ २६ ॥

इतोऽपि किं वीरयसे न कुर्वतो नृपां धनुर्बाणगुणैर्वशंवदान् ।
गुणेन शुद्धेन विधाय निर्भरं तमेनमुर्वीवलयोर्वशी वशम् ॥२७॥

एतद्भीतारिनारी गिरिबिलविगलद्वासरा निःसरन्ती
स्वक्रीडाहंसमोहग्रहिलशिशुभृशप्रार्थितोन्निद्रचन्द्रा ।
आक्रन्दद्भूरियत्तन्नयनजलमिलच्चन्द्रहंसानुबिम्ब-
प्रत्यासत्तिप्रहृष्यत्तनयविहसितैराश्वसीन्न्यश्वसीच्च ॥ २८ ॥

---

इतोऽपीति ॥ हे भैमि ! उर्वीवलयोर्वशी भूलोकाप्सरोविशेषस्त्वं शुद्धेनानवद्येन गुणेन सौन्दर्यगुणेन मौर्व्या च एकैनैवेति भावः । तमेनं महेन्द्र-नाथं निर्भरं नितान्तं वशं विधाय वशीकृत्य धनुर्बाणगुणैः त्रिभिरपि नृपान्वशं-वदान् वश्यान् । प्रियवशे वदः खच् । कुर्वतः कुर्वाणादितोऽस्मादपि । पञ्चमी । किं न वीरयसे न पराक्रमसे । "वीरशूरविक्रान्तौ" इति चौरादिकाल्लट् ॥ २७

एतदिति ॥ एतस्मान्महेन्द्रनाथाद्भीतस्यारेर्नारी गिरिबिलेषु गुहासु विगलन्वासरो यस्याः सा तत्रैव नीतदिनेत्यर्थः । निःसरन्ती ततः सायं निष्क्रा-मन्ती स्वक्रीडाहंसमोहेन तद्भ्रान्त्या ग्रह आग्रहः तद्वान् ग्रहिलः । पिच्छादित्वा-दिलच् प्रत्ययः । तेन शिशुना कथं प्रार्थितो ग्रहीत्वा दीयतामिति याचित उन्निद्रश्चन्द्रः पूर्णेन्दुः यस्याः सा सती भूरि भूयिष्ठमाक्रन्दत् । यद्यस्मादाक्रन्दना-त्तस्या मातुर्नयनजले मिलन् सङ्क्रामन् चन्द्र एव हंसस्तस्यानुबिम्बस्य प्रत्यासत्त्या प्रतिबिम्बप्राप्त्या प्रहृष्यतस्तनयस्य विहसितैः अट्टहासैराश्वसीत् स्तम्भितहृद-यासीत् । किन्तु न्यश्वसीच्चेति दुर्दशानुभावदुःखानुभावोक्तिः । ह्यान्तक्षणश्वसे-त्यादिना सिचि वृद्धिप्रतिषेधः । अत्र नारीशिशोश्चन्द्रबिम्बे तत्प्रतिबिम्बे च कविसम्मतसादृश्याद्धंसभ्रान्तिनिबन्धनात् भ्रान्तिमदलङ्कारः ॥ २८ ॥

अस्मिन्दिग्विजयोद्यते पतिरयं मे स्तादिति ध्यायिनी
कम्पं सात्त्विकभावमञ्चति रिपुक्षोणीन्द्रदारा धरा ।
अस्यैवाभिमुखं निपत्य समरे यास्यद्भिरूर्ध्वं निजः
पन्था भास्वति दृश्यते बिलमयः प्रत्यर्थिभिः पार्थिवैः ॥

विद्राणे रणचत्वरादरिगणे त्रस्ते समस्ते पुनः
कोपात्कोऽपि निवर्तते यदि भटः कीर्त्या जगत्युद्भटः ।
आगच्छन्नपि सम्मुखं विमुखतामेवाधिगच्छत्यसौ
द्रागेतच्छुरिकारयेण ठणिति च्छिन्नापसर्पच्छिराः ॥ ३० ॥

---

**अस्मिन्निति** ॥ अस्मिन् महेन्द्रनाथे दिग्विजयोद्यते सति रिपुक्षौणीन्द्राणां दाराः कलत्रभूता धरा अयं महेन्द्रनाथ एव मे मम पतिः स्तात् अस्तु । अस्तेर्लोटि सिपि तातङादेशः । श्नसोरल्लोप इति अकारलोपः । इति ध्यायिनी सङ्कल्पयन्ती कम्पं कम्पाख्यं सात्विकभावमञ्चति प्राप्नोति । औत्पातिके भूकम्पे सात्विकोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या । किञ्चास्यैव समरे अभिमुखं निपत्यागत्योर्ध्वमूर्ध्वलोकं यास्यद्भिः प्रत्यर्थिभिः पार्थिवैः भास्वति सूर्यमण्डले बिलमयच्छिद्ररूपः निजः पन्था दृश्यते । आसन्नमृत्योरादित्यमण्डलं सच्छिद्रमिव दृश्यत इत्यागमः । अत्रात्मीयोर्ध्वगमनमागत्वोत्प्रेक्षा पूर्ववद्गम्या । "द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥" इति ॥ २९ ॥

**विद्राण इति** ॥ समस्तेऽरिगणे त्रस्ते रणचत्वराद्रणाङ्गणाद्विद्राणे विद्रुते सति । द्रातेः कर्तरि क्तः । संयोगादेरातो धातोर्यण्वत इति निष्ठातकारस्य नत्वे णत्वम् । कीर्त्या जगत्युद्भटः प्रसिद्धः कोऽपि भटः कोपात् पुनर्निवर्तते यदि सम्मुखमभिमुखमागच्छन् अप्यसौ भटो द्राक् सपदि एतस्य छुरिकायाः शस्त्रविशेषस्य रयेण । ठणिति च्छेदनशब्दानुकारः छिन्नमपसर्पदपगच्छच्छिरो यस्य स सन् विमुखतां पराङ्मुखत्वमेवाधिगच्छतीति विरोधः । विगतमुखत्वमिति तद्विरोधपरिहाराद्विरोधाभासोऽलङ्कारः ॥ ३० ॥

ततस्तदुर्वीन्द्रगुणाद्भुतादिव स्ववक्त्रपद्मेऽङ्गुलिनालदायिनी ।
विधीयतामाननमुद्रणेति सा जगाद वैदग्ध्यमयेङ्गितैव ताम् ॥ ३१ ॥

अनन्तरं तामवदन्नृपान्तरं तदर्थदृक्कारतरङ्गरिङ्गणा ।
तृणीभवत्पुष्पशरं सरस्वती स्वतीव्रतेजःपरिभूतभूतलम् ॥ ३२ ॥

तदेव किन्तु क्रियते न का क्षतिर्यदेष तद्दूतमुखेन काङ्क्षति ।
प्रसीद काञ्चीमयमाच्छिनत्तु ते प्रसह्य काञ्चीपुरभूपुरन्दरः ॥

---

**तत इति** ॥ ततस्तद्वर्णनानन्तरं तस्योर्वीन्द्रस्य महेन्द्रनाथस्य गुणेष्वद्भुतादाश्चर्यावेशादिव वस्तुतस्त्वनादरादिति भावः । स्ववक्त्रपद्मे अङ्गुलिमेव नालं ददातीति तद्दायिनी पद्मस्य नालाविनाभावादिति भावः । सा दमयन्ती वैदग्ध्यमयं तत्प्रचुरमिङ्गितं यस्याः सैव सती तां सरस्वतीमाननमुद्रणा मौनं विधीयतामिति जगाद अङ्गुलिदानरूपा निजमुखमुद्रैव तस्या मौनोपदेशोऽभूदित्यर्थः । विदग्धा हि स्वेङ्गितेनैव परं बोधयन्तीति भावः ॥ ३१ ॥

**अनन्तरमिति** ॥ अनन्तरं सरस्वती तस्मै तदर्थां नृपान्तरार्थां दृशोस्तारतरङ्गरिङ्गणा प्रौढोर्मिरचना यस्याः सा सती तं दृशा निर्दिशन्तीत्यर्थः । तां दमयन्तीं तृणीभवन् पुष्पशरो यस्य तत् तृणीकृतमन्मथं स्वस्य तीव्रेण तेजसा परिभूतं भूतलं येन तत् नृपान्तरमन्यं नृपम् अवदत् । ब्रूञ् समानार्थकत्वाद्द्विकर्मकत्वम् ॥ ३२ ॥

**तदिति** ॥ हे भैमि ! एष काञ्चीपुरभूपुरन्दरः काञ्चीनगरालङ्कृतदेशाधीश्वरो दूतस्य मुखेन यदेव काङ्क्षति तत्काङ्क्षितं किं नु न क्रियत एव कर्तव्यमेव तदित्यर्थः । का क्षतिः? तत्करणे का हानिः? प्रत्युत श्रेय एवेति भावः । अथ तदाकाङ्क्षितमेव प्रार्थयते अयं काञ्चीपतिस्ते काञ्चीं मेखलां प्रसह्य बलादाच्छिनत्तु आच्छिद्य गृह्णातु काञ्चीपतेरुचितत्वादिति भावः । अत एव प्रसीद प्रसन्ना भव अनुमन्यस्वेत्यर्थः ॥ ३३ ॥

मयि स्थितिर्नम्रतयैव लभ्यते दिगेव तु स्तब्धतया विलङ्घ्यते ।
इतीव चापं दधदाशुगं क्षिपन्नयं नयं सम्यगुपादिशद्द्विषाम् ॥३४॥

अदःसमित्सम्मुखवीरयौवतत्रुटद्भुजाकम्बुमृणालहारिणी ।
द्विषद्गणस्त्रैणदृगम्बुनिर्झरे यशोमरालावलिरस्य खेलति ॥ ३५ ॥

सिन्दूरद्युतिमुग्धमूर्धनि धृतस्कन्धावधिश्यामिके
व्योमान्तःस्पृशि सिन्धुरेऽस्य समरारम्भोद्धुरे धावति ।
जानीमो नु यदि प्रदोषतिमिरव्यामिश्रसन्ध्याधिये
वाऽस्तं यान्ति समस्तबाहुजभुजातेजःसहस्रांशवः ॥ ३६ ॥

---

**मयीति** ॥ अयं काञ्चीपतिश्चापं दधद्धारयन्नाशुगं बाण क्षिपन् द्विषां शत्रूणां मयि विषये नम्रतया अवनत्या प्रणत्या च स्थितिर्हस्तेऽवस्थानं प्रतिष्ठा च लभ्यते । स्तब्धतया अनम्रतथा तु दिगेव विलङ्घ्यते । न कुत्रापि स्थीयत इति नयं नीतिमुपादिशदिव । ब्रु व्यर्थत्वाद्द्विकर्मकः । धनुर्बाणदृष्टान्तेन द्विषां नम्रत्वे स्थितिरन्यथा क्षेप एवेत्युपादिशदिवेत्युत्प्रेक्षा ॥ ३४ ॥

**अद इति** ॥ अस्य काञ्चीपतेर्यशसामेव मरालानां हंसानामावलिः अमुष्य भूपतेः समित्सु युद्धेषु सन्मुखानां वीराणां यौवतानि युवतीसमूहाः, 'गार्भिणं यौवतङ्गण' इत्यमरः । भिक्षादिपाठात् समूहार्थेऽण्प्रत्ययः । भस्याढे तद्धित इति प्राक्पुंवद्भावाभावश्च । तेषां त्रुटन्ति भ्रश्यन्ति भुजासु कम्बूनि शङ्खवलयानि 'शङ्खः स्यात् कम्बुरस्त्रियाम्' इत्यमरः । तान्येव मृणालानि तानि हरतीति तद्धारिणी सती द्विषद्गणस्य एतदीयारिवर्गस्य स्त्रैणे स्त्रीसम्बन्धिनि दृगम्बुनिर्झरे नेत्रजलप्रवाहे खेलति क्रीडति । 'स्त्रीणां पुंसाञ्च यत्किञ्चित् स्त्रैणं पौंस्नम्' इति क्रमादित्यमरः । "स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्" इति नञ् । रूपकालङ्कारः ॥

**सिन्दूरेति** ॥ 'सिन्दूरं नागसम्भवम्' इत्यमरः । तस्य द्युतिभिः मुग्धमूर्धनि सुन्दरमस्तके धृतः स्कन्धोऽवधिर्यस्याः सा श्यामिका यस्य तस्मिन् स्कन्धपर्यन्तं श्यामले तत उपरि सिन्दूरारुण इत्यर्थः । व्योमान्तस्पृशि अभ्रङ्कषे

हित्वा दैत्यरिपोरुरः स्वभवनं शून्यत्वदोषंस्फुटा-
सीदन्मर्कटकीटकृत्रिमसितच्छत्रीभवत्कौस्तुभम् ।
उज्झित्वा निजसद्म पद्ममपि तद्व्यक्तावनद्धीकृतं
लूतातन्तुभिरन्तरद्य भुजयोः श्रीरस्य विश्राम्यति ॥ ३७॥

सिन्धोर्जैत्रमयं पवित्रमसृजत्तत्कीर्तिपूर्ताद्भुतं
यत्र स्नान्ति जगन्ति सन्ति कवयः के वा न वाचंयमाः ।

---

तद्वर्तिनि च अस्य काञ्चीपतेः सिन्धुरे गजे समरारम्भेषूद्धुरे निर्भरे अनर्गल इत्यर्थः । ऋक्पूरब्धूरित्यादिना समासान्तः । धावत्यभिमुखागते सति अन्वनन्तरं समस्तबाहुजानां समस्तक्षत्रियाणां भुजातेजांसि भुजप्रतापा एव सहस्रांशवः सूर्याः प्रदोषतिमिरेण व्यामिश्रसन्ध्याधियैवास्तं यान्ति यदि श्यामारुणसिन्धुरे तिमिरमिश्रसन्ध्याभ्रान्त्यैवास्तं यान्ति किमिति जानीमः । उत्प्रेक्षालङ्कारः ॥३६॥

**हित्वेति** ॥ श्रीर्लक्ष्मीः स्वभवनं निजनिवासं दैत्यरिपोर्विष्णोरुरः शून्यत्वदोषेण रिक्ततादोषेण स्फुटमासीदन्तः प्रत्यासीदन्तः ये मर्कटकीटास्तन्तुवायकीटाः । 'लूना स्त्री तन्तुवायोर्णनाभिमर्कटकाः समाः' इत्यमरः । तेषां सम्बन्धि यत्कृत्रिमसितच्छत्रं सितछत्राकारं लूतातन्तुवितानमण्डलं तथाभवन् कौस्तुभो यस्मिन् कर्मणि तद्यथा भवति तथा हित्वा निजसद्म नित्यनिवासभवनं तत्प्रसिद्धं पद्ममप्यन्तर्लूतातन्तुभिर्व्यक्तमवनद्धीकृतं बद्धं यथा तथोज्झित्वा अद्य सम्प्रत्यस्य भुजयोरन्तर्विश्राम्यति । अत्रैकस्याः श्रियः क्रमेणानेकाधारवृत्त्युक्त्या पर्यायालङ्कारः । तेनैव तद्भुजयोरन्तरस्य श्रीरञ्जने विष्णूरःपद्माभ्यामप्यधिकं वस्तु व्यज्यते ॥ ३७ ॥

**सिन्धोरिति** ॥ अयं काञ्चीपतिः सिन्धोरब्धेः जैत्रञ्जेतृ जयशीलं ततोऽप्यधिकमित्यर्थः । जेतृशब्दात् तृन्नन्तात् प्रज्ञादित्वात् स्वार्थेऽण्प्रत्ययः । पवित्रं पावनं तत्तथा प्रसिद्धं कीर्तिरेव पूर्तं खातकर्म । "नध्याख्यापॄमूर्च्छिमदाम्" इति निष्ठानत्वप्रतिषेधः । तदेवाद्भुतमसृजत् यत्र पूर्ते जगन्ति लोकाः

यद्विन्दुश्रियमिन्दुरञ्चति जलञ्चाविश्य दृश्येतरो
यस्यासौ जलदेवतास्फटिकभूर्जागर्ति यागेश्वरः ॥ ३८ ॥

अन्तः सन्तोषवाष्पैः स्थगयति न दृशस्ताभिराकर्णयिष्य-
न्नङ्गेनानस्तिलोमाऽऽरचयति पुलकश्रेणिमानन्दकन्दाम् ।
न क्षोणीभङ्गभीरुः कलयति च शिरःकम्पनं तन्न विद्मः
शृण्वन्नेतस्य कीर्तीः कथमुरगपतिः प्रीतिमाविष्करोति ॥

---

स्नान्ति । यत्र यस्मिन् विषये कवयः कवयितारो वाचं यच्छन्तीति वाचंयमा न सन्ति सर्वेऽपि मौनिनो भवन्ति, वर्णयितुमशक्यत्वादित्यर्थः । वाचि यमो व्रत इति खच्प्रत्ययः । "वाचंयमपुरन्दरौ च" इति निपातनान्नुमागमः । इन्दुर्यस्य पूर्तस्य बिन्दुश्रियमञ्चति प्राप्नोति । असाविन्दुर्यस्य जलञ्चाविश्य दृश्येतरः सावर्ण्याददृश्यो जलदेवता आप्यशरीरदेवताविशेषः सन् जागर्ति । प्रकारान्तरेणोत्प्रेक्षते । स्फटिकाद्भवतीति स्फटिकभूः स्फटिकोद्भवो यागेश्वरः सन् जागर्ति । स्फटिकलिङ्गे यागेश्वर इति प्रसिद्धिः ॥ ३८ ॥

**अन्तरिति** ॥ एतस्य राज्ञः कीर्तीः शृण्वन् उरगपतिः शेषः दृशो दृष्टयस्ताभिः दृग्भिः आकर्णयिष्यन् श्रोष्यन् अत एवान्तः सन्तोषवाष्पैः न स्थगयति नाच्छादयति अन्यथा चक्षुः श्रवसोऽस्य रूपग्रहणवच्छब्दग्रहणस्यापि तैः प्रतिबन्धादिति भावः । नाङ्गेनेति देशान्तरपाठः । अङ्गेन वपुषा, येनाङ्गविकार इति तृतीया। अङ्गेनेति पाठे अङ्गे वपुषि अस्तिलोमा न भवतीति अनस्तिलोमा अविद्यमानलोमा सन् । अस्तीत्यव्ययं विद्यमानपर्यायः । तस्य सुबधिकारे अस्तिक्षीरादिवचनाद्बहुव्रीहिः । अत एवानन्दकन्दामानन्दकारिणीं पुलकश्रेणीं न आरचयति, तथाक्षौणी भङ्गभीरुः, च पृथिवीविदारणभीतः शिरःकम्पनं च न कलयति । तत्तस्मात् कथं केन प्रकारेण प्रीतिमाविष्करोति न विद्मः । वाक्यार्थः कर्म ॥ ३९ ॥

आचूडाग्रममज्जयज्जयपटुर्यच्छल्यकण्डानयं
संरम्भे रिपुराजकुञ्जरघटाकुम्भस्थलेषु स्थिरान् ।
सा सेवास्य पृथुः प्रसीदसि तया नास्मै कुतस्त्वत्कुच-
स्पर्धागर्धिषु तेषु तान् धृतवते दण्डान् प्रचण्डानपि ॥ ४०

स्मितश्रिया सृक्कणि लीयमानया वितीर्णया तद्गुणशर्मणेव सा ।
उपाहसत् कीर्त्यमहत्वमेव तं गिरां हि पारे निषधेन्द्रवैभवम् ॥

निजाक्षिलक्ष्मीहसितैणशावकामसाऽवभाणीदपरं परन्तपम् ।
पुरेव तद्दिग्वलनश्रियो भुवा भ्रुवा विनिर्दिश्य सभासभाजितम् ॥

---

**आचूडेति ॥** जयेपटुः समर्थोऽयं राजा सङ्ग्रामे रिपुराजकुञ्जरघटानां कुम्भस्थलेषु स्थिरान् निश्चलान् शल्यकाण्डान् शरकाण्डान् आचूडाग्रमापुङ्खमुखं अमज्जयत् निखातवानिति यत् सा अस्य राज्ञः (कर्तुः) पृथुर्महती सेवा तया सेवया त्वत्कुचाभ्यां सह स्पर्धागर्धिषु मत्सरगृध्नुषु तेषु कुञ्जरकुम्भेष्वपराधिषु प्रचण्डानुग्रान् तान् दण्डान् धृतवतेऽपि अस्मै राज्ञे कुतो न प्रसीदसि, एनं वृणीष्वेत्यर्थः ॥ ४० ॥

**स्मितेति ॥** सा भैमी तस्य काञ्चीपतेः गुणशर्मणा गुणप्रीत्येव वस्तुतस्त्वनादरादिति भावः । वितीर्णया विसृष्टया सृक्कण्यधराञ्चले लीयमानया सङ्कुचन्त्या स्मितश्रिया मन्दहासप्रभया कीर्त्यमहत्वमेव वाच्यमानमहत्वमेव अत एव तं काञ्चीपतिं उपाहसदुपहसितवती । तथा हि निषधेन्द्रवैभवं नलमाहात्म्यं गिरां पारे हि वाचामगोचरमित्यर्थः । अत्र नलगुणानुरागाख्येन कारणेनैतदपरागरूपकार्यसमर्थनात् तद्रूपार्थान्तरन्यासः ॥ ४१ ॥

**निजेति ॥** असौ सरस्वती सभासु सभाजितं पूजितं परन्तपं रिपुतापम् । द्विषत्परयोस्तापेरिति खच्प्रत्ययः । खचि ह्रस्वः, अरुर्द्विषजन्तस्य मुम् । अपरमन्यं नृपं पुरेव पूर्ववत् तस्य राज्ञो दिशि वलने या श्रीस्तस्या भुवा स्थानेन तद्दिग्वलितयेत्यर्थः । भ्रुवा दृगूर्ध्वावयवेन । 'ऊर्ध्वदृग्भ्यां भ्रुवावस्त्रियाम्'

कृपा नृपाणामुपरि क्वचिन्न ते नतेन हाहा शिरसा रसादृशाम् ।
भवन्तु तावत्तव लोचनाञ्चला निपेयनेपालनृपालपालयः ॥४३॥

ऋजुत्वमौनश्रुतिपारगामिता यदीयमेयत्परमेव हिंसितुम् ।
अतीव विश्वासविधाति चेष्टितं वहुर्महानस्य स दाम्भिकः शरः ॥

रिपूनवाप्यापि गतोऽवकीर्णितामयं न यावज्जनरञ्जनव्रती ।
भृशं विरक्तानपि रक्तवत्तरान् निकृत्य यत्तानसृजासृजद्युधि ॥४५

---

इत्यमरः। विनिर्दिश्य निजाक्षिलक्ष्म्या स्वनेत्रशोभया हसितैणशावकां मृगाक्षीं भैमीमभाणीत् वभाण ॥ ४२ ॥

— **कृपेति** ॥ हे भैमि ! नतेन अवनतेन शिरसा रसां भुवं पश्यन्तीति रसादृशां अधःपश्यतामित्यर्थः। नृपाणामुपरि क्वचित् कुत्रापि ते कृपा न हाहेति खेदे। तावत्तव लोचनाञ्चलाः कटाक्षाः निपेया ग्राह्या नेपालनृपालस्य नेपाल-भूपतेः पालिः कोटिः तद्दिग्भागो येषां ते भवन्तु, कटाक्षदृष्ट्या तं पश्येत्यर्थः। 'स्त्रियः पाल्यस्त्रिकोटयः' इत्यमरः ॥ ४३ ॥

**ऋजुत्वेति** ॥ यस्येदं यदीयं ऋजुत्वं अवक्रता परच्छन्दानुकूलता मौनं निःशब्दता वाचंयमत्वञ्च श्रुतिपारगामिता कर्णान्तगामित्वं वेदपारगत्वञ्च ता एतदेवंरूपं अतीवात्यन्तं विश्वासान् विगतासून् अन्यत्र विश्वासं प्रत्ययं विदधत्ते इति विश्वासविधायि चेष्टितं चरित्रं परमरिमन्यञ्च हिंसितुं हन्तुमपकर्तुं चैव सोऽस्य राज्ञो बहुरनेकः शरः। जातावेकवचनम्। महानधिकः दम्भः कपटं प्रयोजनमस्येति दाम्भिको लोकवञ्चक इत्यर्थः। प्रयोजनमिति ठक्। 'कपटो-ऽस्त्रीव्याज दम्भा' इत्यमरः। अत्र शूरे दाम्भिकत्वोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥

**रिपूनिति** ॥ यावत् साकल्येन जनानां रञ्जनमेव व्रतमस्यास्तीति तद्व्रती सर्वधन्वीतिवदिनन्तो बहुव्रीहिः। अयं नेपालभूपो रिपूनवाप्याप्यवकीर्णितां क्षतव्रतत्वन्न गतः। कुतः यद्यस्माद्भृशं विरक्तानरक्तानपि रिपून् युधि निकृत्य छित्वा। कृन्ततेः क्त्वो ल्यप्। असृजा रक्तवत्तरानतिशयेन रक्तवर्णाननुरक्तांश्च।

पतत्येतत्तेजोहुतभुजि कदाचिद्यदि तदा
पतङ्गः स्यादङ्गीकृततमपतङ्गापदुदयः ।
यशोऽमुष्येवोपार्जयितुमसमर्थेन विधिना
कथञ्चित् क्षीराम्भोनिधिरपि कृतस्तत्प्रतिनिधिः ॥ ४६ ॥

यावत्पौलस्त्यवास्तूभवदुभयहरिल्लोमरेखोत्तरीये
सेतुप्रालेयशैलौ चरति नरपतेस्तावदेतस्य कीर्तिः ।
यावत्प्राक्प्रत्यगाशापरिवृढनगरारम्भणस्तम्भमुद्रा-
वद्री सन्ध्यापताकारुचिरचितशिखाशोणशोभावुभौ च ॥

---

रञ्जेः क्तवत्वन्तात्तरप् । असृजदकरोत् रिपूनपि रञ्जयतः कुतो जनरञ्जनव्रतभङ्ग इति भावः ॥ ४५ ॥

**पततीति** ॥ पतङ्गः सूर्यः एतस्य राज्ञः तेजोहुतभुजि प्रतापाग्नौ कदाचित्पतति यदि तदा अङ्गीकृततमो भृशंस्वीकृतः पतङ्गस्य शलभस्य य आपदुदयः स येन स्यात् शलभतामियादित्यर्थः । 'पतङ्गः शलभे साधौ मार्जारेऽर्के खगेश्वर' इति वैजयन्ती । किं च अमुष्य राज्ञ एव यश उपार्जयितुमसमर्थेन विधिना ब्रह्मणापि कथञ्चित्तस्य यशसः प्रतिनिधिस्तत्प्रख्यः क्षीराम्भोनिधिः कृतः । न तु तादृग्यशो लब्धमित्यर्थः । सूर्यादधिकप्रतापः क्षीराब्धेरधिकयशाश्चेत्यर्थः ॥४६॥

**यावदिति** ॥ पौलस्त्ययोर्विभीषणवैश्रवणयोर्वास्तूभयन्त्यौ, 'वेश्मभूर्वास्तुरस्त्रियाम्' इत्यमरः । उभे च ते हरितौ उभयहरितौ दक्षिणोत्तरदेशावित्यर्थः । "उभादुदात्तो नित्यम्" इत्यत्र पृथग्योगकरणादेवायजादेशस्य नितत्वे सिद्धे पुनर्नित्यग्रहण वृत्तिविषये उभशब्दस्थाने उभयशब्दप्रयोगनियमज्ञापनार्थमिति कैयटः । तयोर्यथासङ्ख्यं रोमरेखा रोमराजिरुत्तरीयञ्च ते सन्तौ सेतुप्रालेयशैलौ यावत् यावद्दूरस्थिताविति शेषः । किं च प्राचीप्रतीच्यावाशे प्राक्प्रत्यगाशे । "स्त्रियाः पुंवत्" इत्यादिना पुंवद्भावः । तयोः परिवृढौ प्रभू इन्द्र-

युद्धा चाभिमुखं रणस्य चरणस्येवादसीयस्य वा
बुद्धान्तः स्वपरान्तरं निपततामुन्मुच्य बाणावलीः ।
छिन्नं वावनतीभवन्निजभियः खिन्नं भरेणाथवा
राज्ञाऽनेन हठाद्विलोठितमभूद्भूमावरीणां शिरः ॥ ४८ ॥

न तूणादुद्धारे न गुणघटने नाश्रुतिशिखं
समाकृष्टौ दृष्टिर्न वियति न लक्ष्ये न च भुवि ।
नृणां पश्यत्यस्य क्वचन विशिखान् किन्तु पतित-
द्विषद्वक्षःश्वभ्रैरनुमितिरमून् गोचरयति ॥ ४९ ॥

---

वरुणौ । प्रभौ परिवृढ इति निपातः । तयोर्नगरयोरारम्भणे यौ स्तम्भौ मूलस्तम्भौ तयोर्मुद्रेव मुद्रा सन्निवेशो ययोस्तौ सन्ध्ययोरेव द्वयोः पताकयोः रुचिभिर्भाभीरचितयोः शिखयोरग्रयोः शोणशोभा ययोस्तावुभौ अद्री उदयास्तशैलौ यावत्पर्यन्तमेतस्य नरपतेः कीर्तिश्चरति चतुर्दिगन्तविश्रान्तकीर्तिरित्यर्थः ॥ ४७ ॥

**युद्धेति** ॥ युद्धा युद्धं कृत्वा रणस्य वा अन्तरन्तःकरणे स्वेषां परेषां चान्तरं तारतम्यं बुद्धा बाणावलीरुन्मुच्यायुधान्युत्सृज्यादसीयस्य अमुष्य सम्बन्धिनश्चरणस्यैव वाभिमुखं निपततामागच्छतामरीणां हठाच्छिन्नं वा । अथवा निजभियो भरेण भारेण खिन्नं श्रान्तमत एव अवनतीभवन्नम्रीभवत् शिरोऽनेन राज्ञा भूमौ विलोठितं परिवर्तितमभूत् । एतच्छत्रूणां मरणमेतच्छरणं वा गतिर्नान्येति भावः ॥ ४८ ॥

**नेति** ॥ नृणां रणद्रष्टॄणां पुंसां नृ चेति विकल्पान्नामीति दीर्घप्रतिषेधः । दृष्टिरस्य राज्ञो विशिखान् शरान् तूणात् निषङ्गादुद्धारे उद्धरणकाले न पश्यति गुणो मौर्वी, 'मौर्वी गुणो ज्या' इति धनञ्जयः । तेन घटने न सन्धाने न, आश्रुतिशिखमाकर्णान्तं समाकृष्टौ गुणाकर्षणे, न वियत्याकाशे न लक्ष्ये वेध्ये न च भुवि एवं क्वचन कुत्रापि न पश्यतीति सर्वत्रानुषङ्गः । किन्तु पतितानां

दमस्वसुश्चित्तमवेत्य हासिका जगाद देवीं कियदस्य वक्ष्यसि ।
भण प्रभूते जगति स्थिते गुणैरिहाप्यते सङ्कटवासयातना ॥५०॥

ब्रवीति दासीह किमप्यसङ्गतं ततोऽपि नीचेयमतिप्रगल्भते ।
अहो ! सभा साधुरितीरिणः क्रुधा न्यषेधदेतत्क्षितिपानुगान् जनः॥

अथान्यमुद्दिश्य नृपं कृपामयी मुखेन तद्दिङ्मुखसम्मुखेन सा ।
दमस्वसारं वदति स्म देवता गिरामिलाभूवदतिस्मरश्रियम् ॥ ५२

---

द्विषतां वक्षस्सु श्वभ्रैः रन्ध्रैः, 'रन्ध्रं श्वभ्रं वपासुषिः' इत्यमरः । अनुमिति-रानुमानिकज्ञानं अमून् विशिखान् गोचरयति विषयीकरोतीति वेगातिशयोक्तिः ॥

**दमस्वसुरिति** ॥ हासयतीति हासिका हासयित्री काचित् दमस्वसु-श्चित्तमवेत्य बुद्ध्वा देवीं सरस्वतीं जगाद । किमिति । हे देवि ! अस्य राज्ञः सम्बन्धि कियद्वक्ष्यसि कियत्प्रपञ्चयसीत्यर्थः । किंतु प्रभूते महति जगति स्थितै-र्गुणैरिहास्मिन् राज्ञि सङ्कटवासेन सङ्कीर्णस्थित्या यातना तीव्रवेदना आप्यते अनुभूयत इति भण । सर्वगुणाकरोऽयमस्तु नैनं दमयन्ती वृणुत इति भावः ॥

**ब्रवीतीति** ॥ इह सभायां दासी किङ्करी किमप्यसङ्गतं ब्रवीति नीचा तुच्छा इयं दासी । ततो देवीतोऽपि अतिप्रगल्भते उच्छृङ्खलते ब्रूते अहो आश्चर्यं सभा साधुर्धर्म्येति सोल्लुण्ठोक्तिः । इतीरयतीति ईरिण आक्रोशत एतस्य क्षितिपस्यानुगाननुचरान् जनः तटस्थजनः क्रुधा क्रोधेन न्यषेधत् न्यवारयत् ॥ ५१ ॥

**अथेति** ॥ अथ कृपामयी सा गिरां देवता इलाभुवा ऐलेन पुरूरवसा तुल्यं इलाभूवत् । तेन तुल्यं क्रियाचेद्वतिः । क्रियात्र स्मरातिक्रमः । अतिस्मर-श्रियं अतिक्रान्तमदनलावण्यमन्यं नृपमुद्दिश्य तस्य नृपस्य दिङ्मुखसम्मुखेन तद्दिग्भागाभिमुखेन मुखेन करणेन तेनोपलक्षिता सती दमस्वसारं दमयन्तीं वदति स्म ॥ ५२ ॥

विलोचनेन्दीवरवासवासितैः सितैरपाङ्गाध्वगचन्द्रिकाञ्चलैः ।
त्रपामपाकृत्य निभान्निभालय क्षितिक्षितं मालयमालयं रुचः ॥५३

इमं परित्यज्य परं रणादरिः स्वमेव भग्नः शरणं मुधाविशत् ।
न वेत्ति यत्रातुमितः कृतस्मयो न दुर्गया शैलभुवाऽपि शक्यते ॥

अनेन राज्ञाऽर्थिषु दुर्भगीकृतो भवन् घनध्वानजरत्नमेदुरः ।
तथा विदूराद्रिरदूरतां गमी यथा स गामी तव केलिशैलताम् ॥

---

**विलोचनेति** ॥ विलोचने एवेन्दीवरे तयोर्वासेन स्थित्या वासितैः सुरभितैः लब्धप्रकर्षैरित्यर्थः । सितैरवदातैरपाङ्गैरध्वगचन्द्रिकाञ्चलैः कटाक्षमार्गप्रवृत्तकान्तिशिखाभिः (करणैः) रुचः कान्तेरालयं आकरं मालयाख्यन्तं क्षितिक्षितं क्षितीशं, क्षितिं क्षिणोतीति क्षितिक्षित् क्षितीशः । क्षिधातोरैश्वर्यार्थात् क्विप् । तं त्रपामपाकृत्य निभात् कुतश्चिद्व्याजान्निभालय विलोकय ॥ ५३ ॥

**इममिति** ॥ अरिरेतच्छत्रू रणाद्भग्नः सन् परमरिमुत्कृष्टं वा इमं नृपं परित्यज्य शरणमप्राप्य मुधा वृथा स्व स्वकीयं शरणं गृहमेव शरणं रक्षकमविशत् प्रविष्ट इत्यावृत्त्या सम्बन्धः कथं वृथा । वृथात्वे कथं तत्करणं तदाह— यद्यस्मात् कृतस्मयः कृताहङ्कारः सोऽरिदुर्गया दुर्गमया शैलभुवा शैलपृष्ठेन गिरिदुर्गेणापीत्यर्थः । तथा शैलोद्भवया दुर्गया दुर्गादेव्यापि इतोऽस्माद्राज्ञः त्रातुं न शक्यते । किं पुनः स्वगृहेणान्येन वा पुरुषेणापीत्यपिशब्दार्थः । इति न वेत्ति । प्राणाशक्त्या वैयर्थ्यमज्ञानात् प्रवेशः स्मयादज्ञानञ्चेति भावः ॥ ५४ ॥

**अनेनेति** ॥ अनेन राज्ञा अर्थिषु विषये दुर्भगीकृतः तुच्छीकृतः यथेच्छमर्थिभिरुपादीयमानरत्नोऽपि कियदेतदित्युपेक्षेत इत्यर्थः । तथा घनध्वानजैः नवमेघशब्दोत्थैरत्नैः मेदुरः पूर्ण एव भवन् अतिव्ययेऽप्यक्षीणरत्न इत्यर्थः । विदूराद्रिः वैदूर्याचलः तथा तेन प्रकारेण अदूरतामासन्नतां गामी गमिष्यन् यथा सोऽद्रिस्तव केलिशैलतां गामी गमिष्यन् । "भविष्यति गम्यादयः" इति गमिगाम्योः साधुत्वम् । "न लोक" इत्यादिना षष्ठीप्रतिषेधात् कर्मणि द्वितीया ॥

नम्रप्रत्यर्थिपृथ्वीपतिमुखकमलम्लानताभृङ्गजात-

छायान्तःपातचन्द्रायितचरणनखश्रेणिरैणेयनेत्रे ! ।

दृप्तारिप्राणवातामृतरसलहरीभूरिपानेन पीनं

भूलोकस्यैष भर्ता भुजभुजगयुगं सांयुगीनं बिभर्ति ॥५६॥

अध्याहारः स्मरहरशिरश्चन्द्रशेषस्य शेष-

स्याहेर्भूयः फणसमुचितः काययष्टीनिकायः ।

दुग्धाम्भोधेर्मुनिचुलुकनत्रासनाशाभ्युपायः

कायव्यूहः क्व जगति न जागर्त्यदः कीर्तिपूरः ॥ ५७ ॥

---

**नम्रेति** ॥ एण्या इमे ऐणेये, 'एणेयमेण्याश्चर्माद्यमेणस्यैणमुभे त्रिषु' इत्यमरः । एण्या ढञ् । ते च ते नेत्रे च ते इव नेत्रे यस्यास्तस्याः सम्बुद्धि-रैणेयनेत्रे ! उपमानपूर्वपदवहुव्रीहावुत्तरपदलोपः । नम्राणां प्रत्यर्थिपृथिवीपतीनां मुखान्येव कमलानि तेषु या म्लानता सैव भृङ्गजातन्तस्य च्छाया नीलच्छाया तस्या अन्तःपातेन मध्यगतत्वेन चन्द्रायिता चन्द्रवदाचरिता कलङ्कसंसक्तेरिति भावः । सा चरणनखश्रेणिर्यस्य सः भूलोकस्य भर्ता एष राजा दृप्तारिप्राणवाता एव अमृतरसस्य लहर्य ऊर्मयस्तासां भूरिणा भूयसा पानेन पीन मांसलमत एव संयुगे साधु सांयुगीनं भुजभुजगयुगं विभर्तीति रूपकालङ्कारः ॥ ५६ ॥

**अध्याहार इति** ॥ स्मरहरशिरसि चन्द्रशेषस्य चन्द्रखण्डस्याध्याहारः शेषपूरकः शेषस्याहेरनन्तोरगस्य भूयसां फणानां समुचितः काययष्टीनां निकायः समूहः यावत्फणं कायैर्भवितव्यमिति भावः । दुग्धाम्भोधेः क्षीराम्भोधेः मुने-रगस्त्यस्य चुलुकनाच्चुलुकग्रहणात् त्रासस्तस्य नाशे अभ्युपाय उपायभूतः कायव्यूहः कायसङ्घातः क्षीराब्धेः प्रतिनिधिरित्यर्थः । अदः कीर्तिपूरोऽमुष्य यशोराशिः क्व जगति न जागर्ति त्रैलोक्येऽपि जागर्तीत्यर्थः । अत्र कीर्तिपूरस्य त्रैलोक्यासम्बन्धेऽपि तत्सम्वन्धोक्तेस्तद्रूपातिशयोक्तिः । सा चास्य चन्द्रे शेषा-ध्याहारत्वादिरूपकोत्थापितेति सङ्करः ॥ ५७ ॥

राज्ञामस्य शतेन किं कलयतो हेतिं शतघ्नीं कृतं
लक्षैर्लक्षभिदो दृशैव जयतः पद्मानि पद्मैरलम् ।
कर्तुं सर्वपरच्छिदः किमपि नो शक्यं परार्धेन वा
तत्सङ्ख्यापगमं विनाऽस्ति न गतिः काचिद्गतैतद्द्विषाम् ॥

वयस्ययाऽऽकूतविदा दमस्वसुः स्मितं वितत्याभिदधेऽथ भारती ।
इतः परेषामपि पश्य याचतां भवन्मुखेन स्वनिवेदनत्वराम् ॥५९

---

**राज्ञामिति** ॥ शतघ्नीं नाम हेतिमायुधम् । 'शतघ्नी तु चतुःशल्या लोहकण्टकसूचिता' इति यादवः । शतं हन्तीति शतघ्नीति च गम्यते । "अमनुष्यकर्तृके च" इति ठक्प्रत्यये ङीप् । तां शतघ्नीं कलयतो वधतोऽस्य राज्ञां शतेन किं किञ्चित्करमित्यर्थः । लक्षभिदो लक्षभेदिनो लक्षसङ्ख्यारिहन्तुश्च । लक्षं शरव्ये सङ्ख्यायाम्' इति च विश्वः । राज्ञां लक्षैः कृतं अलमित्यर्थेऽव्ययम् । दृशा दृष्ट्यैव पद्मान्यब्जानि सङ्ख्याविशेषांश्च । 'पद्मं स्यात् पन्नगे व्यूहे निधौ सङ्ख्यान्तरेऽम्बुजे' इति विश्वः । जयतोऽस्य पद्मैः पद्मसङ्ख्याभिरलं किं वहुना सर्वपरच्छिदः शत्रुच्छिदोऽस्य राज्ञां परार्धेन च सङ्ख्यया वा परेषामरीणामर्धेन किं किमपि कर्तुं नो शक्यम् । तत् तस्मादेतद्द्विषां सङ्ख्यापगमं अपगमसङ्ख्यात्वं सङ्ख्याद्युद्धादपगममपसरणं विना काचिद्गतिर्नास्ति बत । 'सङ्ख्यं समिति सङ्ख्या स्यादेकत्वादिविचारयोः' इति विश्वः । अत्रैतद्द्विषद्गतिमत्वस्य सङ्ख्योपगमतदपगमयोरुभयोः प्राप्तस्य पूर्वत्वनिषेधस्योत्तरत्र नियमनात्परिसङ्ख्या । तथा च सूत्रम्—"एकस्यानेकप्राप्तावेकत्र नियमनं परिसङ्ख्या" इति ॥ ५८ ॥

**वयस्ययेति** ॥ अथ दमस्वसुराकूतविदाऽभिप्रायज्ञया वयस्यया सख्या स्मितं वितत्य कृत्वा भारती वाग्देवी अभिदधे अभिहिता । किमिति इतोऽस्माद्राज्ञः परेषामन्येषामपि याचतां राज्ञां भवन्मुखेन त्वद्वाचैव स्वनिवेदने स्वकथने त्वरां द्रुतकथनास्थां पश्य पर्यालोचय । तामिति गम्यते ॥ ५९ ॥

कृताऽत्र देवी वचनाधिकारिणी त्वमुत्तरं दासि! ददासि का सती।
इतीरिणस्तन्नृपपारिपार्श्विकान् स्वभर्तुरेव भ्रुकुटिर्न्यवर्तयत् ॥ ६०

धराधिराजं निजगाद भारती तत्सम्मुखेषद्वलिताङ्गसूचितम् ।
दमस्वसारं प्रति सारवत्तरं कुलेन शीलेन च राजसूचितम् ॥ ६१

कुतः कृतैवं नवलोकमागतं प्रति प्रतिज्ञाऽनवलोकनाय वा ।
अपीयमेनं मिथिलापुरन्दरं निपीय दृष्टिः शिथिलास्तु ते वरम् ॥

न पाहि पाहीति यदब्रवीरमुं ममौष्ठ तेनैवमभूदिति क्रुधा ।
रणक्षितावस्य विरोधिमूर्धभिर्विदश्य दन्तैर्निजमोष्ठमास्यते ॥६३॥

---

**कृतेति** ॥ हे दासि! अत्र स्वयम्वरे देवी वाग्देवी वचने राजकथने अधिकारिणी कर्त्री कृता नियुक्ता । त्वं का सती कुत्राधिकृता सती उत्तरं ददासि इति ईरिण इति ब्रुवाणान् तस्य नृपस्य परिपार्श्वे वर्तन्त इति पारिपार्श्विकान् सेवकान् । "परिमुखञ्च" इति चकाराट्ठक् । स्वभर्तुः स्वस्वामिन एव भ्रुकुटिर्न्यवर्तयत् । तत्स्वाम्येव तान् भ्रूभङ्गेन निवारितवानित्यर्थः ॥ ६० ॥

**धरेति** ॥ भारती कुलेन सद्वृत्तेन राजसु मध्ये उचितं सारवत्तरं बलवत्तरं तस्याः सम्मुखं यथा तथा ईषद्वलितेन वक्रितेन अङ्गेन वपुषा सूचितं निर्दिष्टं धराधिराज भूपतिं दमस्वसारं प्रति निजगाद तस्यै कथयामासेत्यर्थः ॥

**कुत इति** ॥ हे भैमि! आगतं नवलोकमपूर्वजनं प्रति एवमिति हस्तनिर्देशः । अवलोकनाय वा अवलोकितुमेव कुतः प्रतिज्ञा कृता न युक्तमिति भावः । किन्तु एनं पुरोवर्तिनं मिथिलापुरन्दरमपि मिथिलापतिं वा निपीय सम्यक् निरीक्ष्य ते तव दृष्टिः शिथिला शिथिलाऽनादरास्तु वरं अनीक्षणादीक्षित्वोपेक्षणमपि किञ्चित्प्रियमित्यर्थः ॥ ६२ ॥

**नेति** ॥ हे मदोष्ठ! मदीयाधर! यद्यस्मात् पाहि पाहीत्यमुं नृपं नाब्रवीः दुरभिमानादिति शेषः । ओष्ठयाक्षरप्रायत्वेऽपि इति च गम्यते । तेनैव

भुजेऽपसर्पत्यपि दक्षिणे गुणं सहेषुणाऽऽदाय पुरः प्रसर्पिणे ।
धनुःपरीरम्भमिवास्य सम्मदान्महाहवे दित्सति वामबाहवे ॥६४॥

अस्योर्वीरमणस्य पार्वणविधुद्वैराज्यसज्जं यशः
सर्वाङ्गोज्ज्वलशर्वपर्वतसितश्रीगर्वनिर्वासि यत् ।
तत्कम्बुप्रतिबिम्बितं किमु शरत्पर्जन्यराजिश्रियः
पर्यायः किमु दुग्धसिन्धुपयसां सर्वानुवादः किमु ॥६५॥

---

पाहीत्यवचनेनैव एवमीदृशी दशाऽभूदिति हेतोः क्रुधा क्रोधेन रणक्षितावस्य । विरोधिमूर्धभिः शत्रुशिरोभिः निजमोष्ठं विदश्यास्यते स्थीयते एतच्छत्रूणामेतच्चरणमेव शरणम् अन्यथा मरणमेवेति भावः । अत्र शत्रुशिरसां प्रत्यर्थिविषयक्रोधहेतुकस्योष्ठदंशनस्योष्ठविषयक्रोधहेतुकत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥ ६३ ॥

**भुज इति** ॥ महाहवे महारणे अस्य राज्ञो धनुर्दक्षिणे अपसव्ये दक्षे च भुजे इषुणा सह गुणं ज्यामादाय अपसर्पत्यपसरत्यपि पुरः प्रसर्पिणे पुरोगामिने इह गुणसहायभावेऽपीति भावः । वामबाहवे सम्मदात्सन्तोषात्परीरम्भमालिङ्गनम् । उपसर्गस्य घञमनुष्ये बहुलमिति दीर्घः । दित्सतीव दातुमिच्छतीवेत्युत्प्रेक्षा वीतभयत्वादिति भावः । ददातेः सनन्ताल्लट् । "सनिमीमा" इत्यादिना इदादेशः । अभ्यासलोपः । दक्षिणोऽप्येष परापकारी न पूज्यते । वामोऽप्यवसरोपकारी पूज्यत इति भावः ॥ ६४ ॥

**अस्येति** ॥ अस्योर्वीरमणस्य भूपतेः सम्बन्धि पर्वणि भवः पार्वणस्तस्य विधोः राकाचन्द्रस्य द्वैराज्यं तदेकस्वामिके धावल्य इति शेषः । द्विराजशब्दाद्बहुव्रीह्यन्ताद्ब्राह्मणादित्वात् ष्यञ्प्रत्ययः । तत्र सज्जं सन्नद्धं द्वितीयचन्द्रायमाणमित्यर्थः । सर्वाङ्गे उज्वलस्य धवलस्य शर्वपर्वतस्य कैलासस्य सितः सितिमा धावल्यम् । 'गुणे शुक्लादयः पुंसि' इत्यमरः । तस्य श्रिया सम्पदा यो गर्वस्तं निर्वासयति लुम्पतीति तन्निर्वासि कैलासशैलादधिकं यद्यशस्तत् कम्बूनां शङ्खानां

निस्त्रिंशत्रुटितारिवारणघटाकुम्भास्थिकूटाऽवट-
स्थानस्थायुकमौक्तिकोत्करकिरः कैरस्य नायङ्करः ।
उन्नीतश्चतुरङ्गसैन्यसमरत्वङ्गत्तुरङ्गक्षुर-
क्षुण्णासु क्षितिषु क्षिपन्निव यशः क्षोणीजवीजव्रजम् ॥६६

अर्थिभ्रंशबहूभवत्फलभरव्याजेन कुब्जायितः
सत्यस्मिन्नतिदानभाजि कथमप्यास्तां स कल्पद्रुमः ।
आस्ते निर्व्ययरत्नसम्पदुदयोदग्रः कथं याचक-
श्रेणीवर्जनदुर्यशो निबिडितव्रीडस्तु रत्नाचलः ॥ ६७ ॥

---

प्रतिविम्बितं प्रतिविम्बनं प्रतिच्छाया किमु किं वा? शरत्पर्जन्यराजिश्रियः शरन्मेघावलिधावल्यसम्पदः पर्यायो रूपान्तरं किमु? अथ वा दुग्धसिन्धोः क्षीराब्धेः पयसां क्षीराणां सर्वानुवादः सर्वस्यापि पुनरुक्तिः किमु? कृत्स्नं तत् क्षीरमेवेदं किमित्यर्थः । उत्प्रेक्षात्रयस्य संसृष्टिः ॥ ६५ ॥

**निस्त्रिंशेति** ॥ निर्गतस्त्रिंशताऽङ्गुलिभ्यो निस्त्रिंशः खड्गः डच्प्रकरणे सङ्ख्यायास्तत्पुरुषस्योपसङ्ख्यानं निस्त्रिंशाद्यर्थमिति समासान्तो डच्प्रत्ययः । तेन त्रुटितेषु चिह्नितेष्वरिवारणघटाकुम्भेष्वस्थिकूटानामस्थिसङ्घातानां अवटस्थानेषु गर्तप्रदेशेषु स्थायुकाः स्थायिनः । लषपतेत्यादिना उकञ्प्रत्ययः । तेषां मौक्तिकोत्कराणां मुक्तासमूहानां किरतीति किरः क्षेप्ता । इगुपधज्ञेति कः । अस्य नृपस्यायङ्करः चत्वार्यङ्गानि हस्त्यादीनि येषां तेषां सैन्यानां समरेषु त्वङ्गद्भिः सञ्चरद्भिः तुरङ्गैः क्षुरैः क्षुण्णासु कृष्टासु क्षितिषु यशःक्षोणीजस्य कीर्तिवृक्षस्य वीजानां व्रजं क्षिपन् गिरन् वपन्निव स्थित इति कैर्जनैर्नोन्नीतो नोत्प्रेक्षित इत्युत्प्रेक्षा ॥ ६६ ॥

**अर्थीति** ॥ अस्मिन् राज्ञि अतिदानभाजि दानशौण्डे सति सः प्रसिद्धः कल्पद्रुमः अर्थिनां भ्रंशेनासम्भवेन बहूभवतः व्ययाभावादुपचीयमानस्य फलभरस्य व्याजेन कुब्जायितः कुब्जीभूतः सन् वस्तुतस्तु लज्जयैवेति भावः ।

सृजामि किं विघ्नमिदं नृपस्तुताविती ङ्गितैः पृच्छति तां सखीजने।
स्मिताय वक्रं यदवक्रयद्वधूस्तदेव वैमुख्यमलक्षि तन्नृपे ॥ ६८ ॥

दृशाथ निर्दिश्य नरेश्वरान्तरं मधुस्वरा वक्तुमधीश्वरा गिराम् ।
अनूपयामास विदर्भजाश्रुती निजास्यचन्द्रस्य सुधाभिरुक्तिभिः ॥

स कामरूपाधिप एष हा त्वया न कामरूपाधिक ईक्ष्यतेऽपि यः।
त्वमस्य सा योग्यतमाऽपि वल्लभा सुदुर्लभा यत्प्रतिमल्लभा परा ॥

---

लोहितादेराकृतिगणत्वात् क्यङि कर्तरि क्तः । कथमप्यास्तां लज्जावरणसम्भवादिति भावः । किन्तु निर्व्ययानां विनियोगरहितानां रत्नसम्पदामुदयेनोदग्र उच्छ्रितः तथापि याचकश्रेणीनां कर्णीणां वर्जनेन परिहारेण यत् दुर्यशः तेन निविडितव्रीडो घनीकृतलज्जो रत्नाचलो रोहणाद्रिस्तु कथमास्ते कथं तिष्ठति लज्जासम्वरणोपायासम्भवादिति भावः । अत्र द्रुमशैलयोर्लज्जाऽसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिभेदः ॥ ६७ ॥

**सृजामीति** ॥ अथ सखीजने तां भैमीं इदं नृपस्यैतत् नृपस्य स्तुतौ विघ्नं सृजामि किमितीङ्गितैश्चेष्टितैः पृच्छति सति वधूर्भैमी स्मिताय स्मितं कर्तुं क्रियार्थेत्यादिना चतुर्थी । वक्रमवक्रयत् । वक्रीचकारेति यत् तद्वक्रीकरणमेव तन्नृपे तस्मिन्नृपे वैमुख्यं नैस्पृह्यमलक्षि लक्षितम् ॥ ६८ ॥

**दृशेति** ॥ अथ मधुस्वरा मधुरकण्ठी गिरामधीश्वरा सरस्वती नरेश्वरान्तरं राजान्तरं वक्तुं वर्णयितुं दृशा विनिर्दिश्य निरूप्य विदर्भजाया वैदर्भ्याः श्रुती श्रोत्रे निजास्यचन्द्रस्य सुधाभिरुक्तिभिर्वचनामृतैरित्यर्थः । अनूपयामास सरसीचकार । 'जलप्रायमनूपं स्यात्' इत्यमरः । अनुगता आपोऽस्येत्यनूपं, "ऋक्पूः" इत्यादिना समासान्तः ऊदनोर्देश इत्यूकारः, तस्मात् तत्करोतीत्यादिना ण्यन्ताल्लिट् ॥ ६९ ॥

**स इति** ॥ एष पुरोवर्ती सः प्रसिद्धः कामरूपाधिपः कामरूपदेशाधीश्वरः कामरूपाधिकः कामात्कन्दर्पादपि रूपेणाधिको यस्त्वया नेक्ष्यते हा बत नैत-

अकर्णधाराशुगसम्भृतां गतां गतैररित्रेण विनास्य वैरिभिः ।
विधाय यावत्तरणेर्भिदामहो! निमज्य तीर्णः समरे भवार्णवः ॥

यदस्य भूलोकभुजो भुजोष्मभिस्तपर्तुरेव क्रियतेऽरिवेश्मनि ।
प्रपां न तत्रारिवधूस्तपस्विनी ददातु नेत्रोत्पलवासिभिर्जलैः ॥ ७२

---

युक्तमिति भावः । कुतः ययोर्युवयोः प्रतिमल्ला समाना भा कान्तिर्यस्याः सा यत्प्रतिमल्लभा परा अन्या व्यक्तिः सुदुर्लभा अतिदुर्लभा । सा त्वमस्य राज्ञो योग्यतमा अत्यन्तानुरूपा वल्लभा दयितासि समानसौन्दर्यतया समागमयोग्योयं त्वया वीक्षितव्य एवेत्यर्थः ॥ ७० ॥

**अकर्णेति** ॥ कर्ण इव कर्णः प्रतिमुखशल्यं तद्रहिता अकर्णा, न कर्णिभिर्नापि दिग्धैरिति निषेधादिति भावः । अकर्णा धारा आश्रयो येषां तैः आशुगैर्विशिखैः सम्भृतानि स्यूतान्यङ्गानि येषां ते तदङ्गास्तत्तां गतैरस्य वैरिभिः अरिभ्यस्त्रायत इत्यरित्रं वर्मादि तेन विना तद्विहाय समरे निमज्य मृत्वा तरणेर्भिदां विधाय यावत् सूर्यमण्डलं भित्वैव भवः संसार एवार्णवस्तीर्णः अहो! किं च कर्णधारं नाविकमाशुगमनुकूलवायुमरित्रेण केनिपातकेन च विना तरणेर्नावो भेदे जले निमज्यापि सम्भृताङ्गैरविकलाङ्गैरेवार्णवस्तीर्णः अहो भाग्यमित्यर्थान्तरं गम्यते ॥ ७१ ॥

**यदिति** ॥ यद्यस्मादस्य भूलोकभुजो भूभुजो भुजोष्मभिर्भुजप्रतापैररिवेश्मनि तपर्तुः ग्रीष्मर्तुरेव क्रियते नित्यसन्तापः क्रियत इत्यर्थः । तत्तस्मात् तत्रारिवेश्मनि तपस्विनी शोच्या धर्मशीला चारिवधूर्नेत्रोत्पलयोर्वसन्तीति तद्वासिभिरुत्पलवासनावद्भिश्च जलैः प्रपिबन्त्यस्यामिति प्रपां पानीयशालिकां, घञर्थे कविधानम् । न ददातीति काकुः ददात्येवेत्यर्थः । धार्मिका हि धर्मकाले वासितोदकप्रायाः प्रपाः प्रवर्तयन्तीति भावः ॥ ७२ ॥

एतद्दत्तासिघातस्रवदसृगसुहृद्वंशसार्द्रेन्धनैत-
दोरुद्दामप्रतापज्वलदनलमिलद्धूमधूमभ्रमाय ।
एतद्दिग्जैत्रयात्रासमसमरभरं पश्यतः कस्य नासी-
देतन्नासीरवाजिव्रजखुररजरजोराजिराजिस्थलीषु ॥ ७३ ॥

क्षीरोदन्वदपाः प्रमथ्य मथितादेशेऽमरैर्निर्मिते
स्वाक्रम्यं सृजतस्तदस्य यशसः क्षीरोदसिंहासनम् ।
केषां नाजनि वा जनेन जगतामेतत्कवित्वामृत-
स्रोतःप्रोतपिपासुकर्णकलशीभाजाभिषेकोत्सवः ॥ ७४ ॥

---

**एतदिति** ॥ आजिस्थलीषु रणभूमिष्वेतस्य राज्ञो नासीरे सेनामुखे वाजिव्रजानां खुरैः जाता रजसां राजिरेतस्य दिशो जैत्रेषु । तृन्नन्तत्वात् षष्ठीप्रतिषेधः । यात्रास्वसममसदृशं समरभरं समरसम्पदं पश्यतः कस्य जनस्य एतेन राज्ञा दत्तैः प्रयुक्तैरसिघातैः खड्गप्रहारैः स्रवदसृजः स्रवद्रक्ताः असुहृद्वंशाः शत्रुवर्गाः त एव वंशा वेणवः । 'वंशो वर्गे कुले वेणौ' इति विश्वः । त एव सार्द्रेन्धनानि सरसानीन्धनानि यस्य तस्मिन्नेतस्य राज्ञो दोष्णो भुजस्य उद्दामः गम्भीरः प्रताप एव ज्वलदनले मिलति वर्तमाने धूमभूम्नि धूमसङ्घाते भ्रमाय भ्रान्त्यै नासीत् सर्वस्याप्यासीदेवेत्यर्थः । अत्र रजोराजौ कविसम्मतसादृश्याद्धूमभ्रमोक्त्या भ्रान्तिमदलङ्कारः ॥ ७३ ॥

**क्षीरेति** ॥ अमरैः क्षीराणामुदन्वतः क्षीराब्धेरापः क्षीरोदन्वदापाः । ऋक्पूरित्यादिना समासान्तः । ताः प्रमथ्य विलोड्य मथितं मथनोद्धूतो निर्जलो दधिक्षीरविकारः । 'तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बुनिर्जलम्' इत्यमरः । तद्रूपे आदेशे इवादेशे रूपान्तरे निर्मिते सम्पादिते सति रूपान्तरापादनेन क्षीराब्धावभावङ्गमिते सतीत्यर्थः । तत्तथा प्रसिद्धमुदकं यस्य सः क्षीरोदः क्षीराब्धिः, "उदकस्योदः संज्ञायाम्" इत्युदादेशः । तस्य सिंहासनं स्वेनाक्रम्यमाक्रमणीयं सृजतः कुर्वतः स्वयमाक्रमत इत्यर्थः । अस्य राज्ञो यशसः एतस्य

समिति पतिनिपाताकर्णनद्रागदीर्ण-
प्रतिनृपतिमृगाक्षीलक्षवक्षःशिलासु ।
लिखितलिपिरिवोरस्ताडनव्यस्तहस्त-
प्रखरनखरटङ्कैरस्य कीर्तिप्रशस्तिः ॥ ७५ ॥

विधाय ताम्बूलपुटीं कराङ्कगां बभाण ताम्बूलकरङ्कवाहिनी ।
दमस्वसुर्भावमवेत्य भारतीं नयाऽनया वक्त्रपरिश्रमं शमम् ॥ ७६

---

राज्ञः सम्बन्धि कवित्वमेतद्विषयङ्कवित्वमित्यर्थः । तदेवामृतन्तस्य स्रोतसा प्रवाहेण प्रोते पूरिते पिपासूनां पातुमिच्छूनां अत्यादरेण शृण्वतां कणावेव कलश्यावभिषेचनकुम्भौ भजतीति तद्राजा केषां वा जगतां सम्बन्धिना जनेन कविजनेन अभिषेकोत्सवो नाजनि न जनितः । जनेर्ण्यन्तात्कर्मणि लुङ् । लोकान्तरस्था अपि कवयः क्षीराब्धिकल्पमेतद्यशः सर्वत्रानन्दकरं कथयन्तीत्यर्थः । अत्र क्षीरोदसिंहासनाध्यासीनः एतद्यशःक्षीरोदस्याखिलाः कवय एवाभिषेक्तारः । कवित्वमेव जलं श्रोतृजनकर्णा एव कलशाः तत्सम्भृतस्यैवास्य परितः प्रसर्पणात् स्तुतिरेवाभिषेक इति रूपकालङ्कारः ॥ ७४ ॥

**समितीति** ॥ अस्य राज्ञः कीर्तेः प्रशस्तिः प्रशंसा समिति आजौ पतिनिपातस्य भर्तृमरणस्याकर्णने श्रवणेऽपि द्राक् सद्य एवादीर्णा आभिन्ना अक्षरविन्यासयोग्या इति यावत् । तासु प्रतिनृपतिमृगाक्षीलक्षाणामरिराजस्त्रीलक्षसङ्ख्यानां वक्षःशिलासु उरस्ताडने व्यस्तानां प्रसारितानां हस्तानां ये प्रखरनखराः तीक्ष्णनखास्तैरेव टङ्कैः पाषाणभेदकैः, 'टङ्कः पाषाणभेदकः' इत्यमरः । रचितलिपिरिव कृताक्षरविन्यास इव इति दुःखातिरेकाद्वक्षःकृतनखव्यालेखनेषु कीर्तिप्रशस्तिलिप्यक्षरत्वोत्प्रेक्षा ॥ ७५ ॥

**विधायेति** ॥ ताम्बूलकरङ्कवाहिनी ताम्बूलपात्रधारिणी दमस्वसुर्भावमवेत्य ज्ञात्वा ताम्बूलपुटीं वीटिकां कराङ्कगां करतलसंस्थांविधाय अनया वीटि-

समुन्मुखीकृत्य बभार भारती रतीशकल्पेऽन्यनृपे निजं भुजम् ।
ततस्त्रसद्बालपृषद्विलोचनां शशंस संसज्जनरञ्जनीं जनीम् ॥ ७७॥

अयं गुणौघैरनुरज्यदुत्कलो भवन्मुखालोकरसोत्कलोचनः ।
स्पृशन्तु रूपामृतवापि! नन्वमुं तवापि दृक्तारतरङ्गभङ्गयः ॥७८॥

अनेन सर्वार्थिकृतार्थताकृताऽऽहृतार्थिनौ कामगवीसुरद्रुमौ ।
मिथःपयः सेचनपल्लवाशने प्रदाय दानव्यसनं समाप्लुतः ॥७९॥

---

कया वक्त्रपरिश्रमश्चिरतरव्याहारजन्यमास्यशोषं शमं शान्तिं नयेति भारतीं बभाण । अम्ब! नायमस्यै रोचते कृतं वृथा श्रमेणेति तात्पर्यम् ॥ ७६ ॥

**समुन्मुखीति** ॥ अथ भारती रतीशकल्पे कामप्रख्ये अन्यनृपे नृपान्तरे विषये निजं भुजं समुन्मुखीकृत्याभिमुखीकृत्य बभार । ततो हस्तोद्यमानन्तरं त्रसद्बालपृषद्विलोचनां चकितबालमृगाक्षीं संसज्जनरञ्जनीं सभाजनमनोहरां जनीं वधूं शशंस उवाचेत्यर्थः ॥ ७७ ॥

**अयमिति** ॥ ननु रूपामृतवापि! सौन्दर्यसुधारसदीर्घिके! गुणौघैरनुरज्यन्त उत्कला जनपदा यस्मिन् सोऽयं राजा भवत्यामुखस्यालोकरसेन आलोकनकौतुकेनोत्कलोचन उत्सुकाक्षस्तवापि दृशोस्ताराः स्थूलास्तरङ्गभङ्गयो वीचीविलासा अमुमुत्कलाधिपतिं स्पृशन्तु स्वानुरागिण्यनुराग उचित इति ॥ ७८

**अनेनेति** ॥ सर्वार्थिनां कृतार्थताकृता पूर्णकामत्वकारिणा अनेन राज्ञा हृतार्थिनावर्थिरहितौ कृतौ कामानां दात्री गौः कामगवी कामधेनुः । गोरतद्धितलुकीति समासान्तष्टच् । सा च सुरद्रुमः कल्पवृक्षश्च तौ मिथोऽन्योन्यं पयःसेचनं क्षीरसेकं पल्लवाशनं पल्लवभोजनञ्च प्रदाय दानव्यसनन्दानासक्तिं समाप्नुतः समापयतः । अर्थ्यन्तराभावादन्योन्यसम्प्रदानकपयःपल्लवमात्रदानेन कथञ्चिद्दानकण्डूत्यपनोदं कुरुत इत्यर्थः ॥ ७९ ॥

नृपः कराभ्यामुदतोलयन्निजे नृपानयं यान् पततः पदद्वये ।
तदीयचूडाकुरुविन्दरश्मिभिः स्फुटेयमेतत्करपादरञ्जना ॥ ८० ॥

यत् कस्यामपि भानुमान्न ककुभि स्थेमानमालम्बते
जातं यद्घनकाननैकशरणप्राप्तेन दावाग्निना ।
एषैतद्भुजतेजसा विजितयोस्तावत्तयोरौचिती
धिक्तं बाडवमम्भसि द्विषि भिया येन प्रविष्टं पुनः ॥८१॥

---

**नृप इति** ॥ अयं नृपः निजे पदद्वये पततः प्रणमतः यान्नृपान् कराभ्यामुदतोलयत् कृपया किरीटेष्वास्फालयत् तदीयास्फालितनृपसम्बन्धिनीषु चूडासु ये कुरुविन्दाः पद्मरागाः । 'कुरुविन्दस्तु मुक्तायां कुल्माषव्रीहिभेदयोः । हिङ्गुले पद्मरागे च' इति विश्वः । तेषां रश्मिभिः एतस्य राज्ञः करपादस्य करयोः पदयोश्च रञ्जना इयं स्फुटा स्वाभाविके करपादरागे राजकिरीटमाणिक्यमयूखरञ्जनात्वमुत्प्रेक्ष्यते । तेनास्यानेकराजविजयित्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ८० ॥

**यदिति** ॥ भानुमान् भास्वान् कस्यामपि ककुभि कुत्रापि दिशि स्थेमानं स्थिरत्वं स्थिरशब्दस्य दृढादिपाठाद्वर्णदृढादिभ्यः ष्यञ्चेति चकारादिमनिच् । प्रियस्थिरेत्यादिना स्थादेशः । नालम्बत इति यद्दावाग्निना घनं सान्द्रं काननमेवैकशरणं प्राप्तेन । द्वितीयाश्रितेत्यादिना समासः । जातमिति यत् । भावे क्तः । एषा एतदुभयमपीत्यर्थः । विधेयप्राधान्यात् स्त्रीलिङ्गता । एतस्य भुजतेजसा भुजप्रतापेन विजितयोस्तयोर्भानुदावाग्न्योरौचितो तावदौचित्यमेव तं बाडवं बडवाग्निं धिक् । येन बाडवेन पुनर्भिया द्विषि सहजद्वेषिण्यम्भसि प्रविष्टम् । भावे क्तः । स्वशत्रुसंश्रयणाद्वरं पलायनमेवेति भावः । अत्र स्वाभाविकस्य सूर्यादिपर्यटनादेरेतद्भीहेतुकत्वोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥ ८१ ॥

अमुष्योर्वीभर्तुः प्रसृमरचमूसिन्धुरभवै-
रवैमि प्रारब्धे वमथुभिरवश्यायसमये ।
न कम्पन्तामन्तः प्रतिनृपभटा म्लायतु न त-
द्वधूवक्त्राम्भोजं भवतु न स तेषां कुदिवसः ॥ ८२ ॥

आत्मन्यस्य समुच्चितीकृतगुणस्याहोतरामौचिती
यद्गात्रान्तरवर्जनादजनयद्भूजानिरेष द्विषाम् ।
भूयोऽहं क्रियते स्म येन च हृदा स्कन्धो न यश्चानमन्
तन्मर्माणि दलं दलं समिदलङ्कर्मीणबाणव्रजः ॥ ८३ ॥

---

**अमुष्येति** ॥ अमुष्योर्वीभर्तुः प्रसृमराः प्रसारिणः । सृघस्यदः क्मरच् । तेभ्यश्चमूसिन्धुरेभ्यः सेनागजेभ्यो भवैर्वमथुभिः करशीकरैः । 'वमथुः करशीकरः' इत्यमरः । अवश्यायसमये नीहारकाले प्रारब्धे सति प्रतिभटनृपाः शत्रुभूपा अन्तरन्तःकरणे न कम्पन्तां कम्पेरन् किमित्यादि सर्वत्र काकुः । तद्वधूनां वक्त्रमेवाम्भोजं नम्लायतु तेषां कुदिवसो दुर्दिनञ्च न भवतु भवदेवेत्यर्थः अवैमि जानामि । वाक्यार्थः कर्म । अत्र करशीकरादौ नीहारादिरूपणाद्रूपकालङ्कारः ॥ ८२ ॥

**आत्मनीति** ॥ आत्मनि स्वस्मिन्नेवं समुच्चितीकृतगुणस्य समाहृतगुणस्यास्य राज्ञः औचिती औचित्यमहोतरामत्याश्चर्यम् । किमेतदित्यादिना अध्यघादामुप्रत्ययः । औचित्यमेवाह—समिति युद्धे अलंकर्मणे, 'अलं कर्मीणः कर्मक्षमः । कर्मक्षमोऽलङ्कर्मीणः' इत्यमरः । पर्यादयो ग्लानाद्यर्थे चतुर्थ्यैति कृतसमासादलङ्कर्मन्शब्दादषडक्षाशिङ्ग्वलंकर्मेत्यादिना खप्रत्ययः । सामिदलंकर्मीणो बाणव्रजो यस्य स तथोक्तः अमोघबाणव्रज इत्यर्थः । अयं भूर्जाया यस्येति भूजानिः भूपतिः । जायाया निङ् । द्विषां सम्बन्धिना येन च हृदा हृदयेन भूयो भूयिष्ठमहं क्रियते स्म अहङ्कृताम् । अहङ्करोतेर्भावे लट् । "लट् स्मे" इति भूते लट् । यः स्कन्दो भुजशिरो नानमत् न प्राणमत् । गात्रान्तराणां अवयवान्तराणां वर्जनाद्वर्जनं कृत्वेत्यर्थः । तेषामनपराधित्वादिति भावः ।

दूरं गौरगुणैरहंकृतिभृतां जैत्राङ्ककारे चर-
त्येतद्दोर्यशसि प्रयाति कुमुदं बिभ्यन्न निद्रां निशि ।
धम्मिल्ले तव मल्लिकासुमनसां माल्यं भिया लीयते
पीयूषप्लवकैतवाद्धृतदरः शीतद्युतिः स्विद्यति ॥ ८४ ॥

एतद्गन्धगजस्तृषाम्भसि भृशं कण्ठान्तमज्जत्तनुः
फेनैः पाण्डुरितः स्वदिक्करिजयक्रीडायशःस्पर्धिभिः ।
दन्तद्वन्द्वजलानुबिम्बनचतुर्दन्तः कराम्भोवमि-
व्याजादभ्रमुवल्लभेन विरहं निर्वापयत्यम्बुधेः ॥ ८५ ॥

---

ल्यब्लोपे पञ्चमी । तस्य हृदयस्कन्धस्य मर्माणि दलं दलं दलयित्वा, "आभीक्ष्ण्ये णमुल् च" इति णमुल्प्रत्ययः । आभीक्ष्ण्ये द्वे भवत इत्युपसङ्ख्यानाद्द्विर्भावः । यदजनयत् यद्दण्डनमकरोदित्यर्थः । तदेतद्दण्ड्यमात्रदण्डनं राज्ञ उचितमाश्चर्यतरं चेत्यर्थः । अहङ्कारादनम्रमरिं समूलघातं हन्त्ययमिति भावः ॥ ८३ ॥

**दूरमिति** ॥ एतस्य राज्ञो दोष्णो भुजस्य यशसि गौरैर्धावल्यैरेव गुणैः । 'गुणे शुक्लादयः पुंसि' इत्यमरः । दूरमत्यन्तमहङ्कृतिभृतां असाधारणाभिमानवतां कुमुदादिधवलवस्तूनां जैत्राङ्ककारे चरति तदहङ्कारखण्डनाय जित्वरयुद्धकारिणि भ्रमति सति । 'अङ्क इत्यनुवृत्तौ च चित्रयुद्धे विभूषणे' इति विश्वः । कुमुदं बिभ्यद्भीत सत् निशि निद्रां स्वापं मुकुलनञ्च न प्रयाति न प्राप्नोति । मल्लिकासुमनसां माल्यं माला भिया तव धम्मिल्ले संयतकेशपाशे । 'धम्मिल्लाः संयताः कचा' इत्यमरः । लीयते अन्तर्धत्ते । शीतद्युतिश्चन्द्रोऽपि धृतदरः धृतत्रासः सन् पीयूषप्लवकैतवादमृतस्रावव्याजात् स्विद्यति निद्रापरिहारादीनि भीतिचिह्नानीति भावः । अत्र दोर्यशःप्रभृतीनामहङ्काराद्यसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिभेदः ॥ ८४ ॥

**एतदिति** ॥ तृषा पिपासयाऽम्भसि भृशं कण्ठान्तं कण्ठपर्यन्तं मज्जन्ती तनुः शरीरं यस्य स स्वस्य यानि दिक्करिजयक्रीडा यशांसि तत्स्पर्धिभिः तत्सदृशैः

अथैतदुर्वीपतिवर्णनाद्भुतं न्यमीलदास्वादयितुं हृदीव सा ।
मधुस्रजा नैषधनामजापिनी स्फुटीभवद्ध्यानपुरःस्फुरन्नला ॥ ८६॥

प्रशंसितुं संसदुपान्तरञ्जनं श्रिया जयन्तं जगतीश्वरं जिनम् ।
गिरः प्रतस्तार पुरावदेव ता दिनान्तसन्ध्यासमयस्य देवता ॥ ८७

तथाधिकुर्या रुचिरे ! चिरेप्सिता यथोत्सुकः सम्प्रति सम्प्रतीच्छति ।
अपाङ्गरङ्गस्थललास्यलम्पटाः कटाक्षधारास्तव कीकटाधिपः ॥ ८८

---

फनैः पाण्डुरितः पाण्डुवर्णीकृतः दन्तद्वन्द्वस्य जले अनुबिम्बनेन प्रतिबिम्बेन चतुर्दन्तो दन्तचतुष्टयवान् एतस्य राज्ञो गन्धगजो दुष्टगजः कराम्भसां वमिर्वमथुः करशीकर इत्यर्थः । 'प्रच्छर्दिका वमिः स्त्री स्यात्' इत्यमरः । औणादिक इकारः । तस्या व्याजादम्बुधेरभ्रमुवल्लभेनैरावतेन विरहं विरहतापन्निर्वापयति शमयतीति सापह्नवोत्प्रेक्षा व्यञ्जकाप्रयोगाद्गम्या ॥ ८५ ॥

**अथेति** ॥ अथ मधुस्रजा वरणार्थया मधूकमालया तयैवाक्षमालयेति भावः । 'मधूके तु गुडपुष्पमधुद्रुमौ' इत्यमरः । नैषधस्य नलस्य नाम जपतीति तज्जापिनी, अत एव स्फुटीभवता साक्षात्कारपरिणामिध्यानेन पुरोऽग्रे स्फुरन् प्रत्यक्षीभवन् नलो यस्याः सा सती सा दमयन्ती एतस्योर्वीपतेरुत्कलेश्वरस्य वर्णनमेवाद्भुतमाश्चर्यरसं हृदि हृदये आस्वादयितुमनुभवितुमिव न्यमीलन्निमीलिताक्षी जाता । परमार्थतस्तु नलसाक्षात्कारसुखास्वादनार्थमेवेत्यर्थः ॥

**प्रशंसितुमिति** ॥ दिनान्तसन्ध्यासमयस्य सायंसन्ध्याकालस्य देवता सा सरस्वती, सन्ध्यावित्यर्थे सरस्वतीति श्रुतेः । संसदुपान्तरञ्जनं सर्वास्थानरञ्जकमित्यर्थः । श्रिया सौन्दर्येण जिनं जिनाख्यं देवं सोऽतिसुन्दर इति प्रसिद्धेः। तं जयन्तं ततोऽपि सुन्दरमित्यर्थः । जगतीश्वरं पृथिवीपतिं प्रशंसितुं स्तोतुं पुरावत् पूर्ववदेव ताः प्रसिद्धा गिरः प्रतस्तार प्रपञ्चयामास ॥ ८७ ॥

**तथेति** ॥ हे रुचिरे! सुन्दरि! उत्सुक उत्कण्ठितः कीकटाधिपो मगधेश्वरश्चिरेप्सिताश्चिरात् प्रभृत्याकाङ्क्षिताः अपाङ्गो नेत्रान्तः स एव रङ्गस्थलं

इदं यशांसि द्विषतः सुधारुचः किमङ्कमेतद्द्विषतः किमाननम् ।
यशोभिरस्याखिललोकधाविभिर्विभीषिता धावति तामसीमसी ॥

इदं नृपप्रार्थिभिरुज्झितोऽर्थिभिर्मणिप्ररोहेण विवृध्य रोहणः ।
कियद्दिनैरम्बरमावरिष्यते मुधा मुनिर्विन्ध्यमरुद्ध भूधरम् ॥९०॥

भूशक्रस्य यशांसि विक्रमभरेणोपार्जितानि क्रमा-
देतस्य स्तुमहे महेभदशनस्पर्धीनि कैरक्षरैः ।

---

तत्र लास्ये नर्तने लम्पटा लालसाः । 'लोलुपो लोलुभो लोलो लम्पटो लालसोऽपि च' इति यादवः । तव कटाक्षधाराः कटाक्षपरम्परा यथा सम्प्रति इदानीं सम्प्रतीच्छति प्रतीच्छते तथाधिकुर्याः प्रसारय । कटाक्षदृष्ट्याप्येनं पश्येत्यर्थः ॥

**इदमिति** ॥ अखिललोकान् धावन्ति गच्छन्तीति तद्धाविभिरस्य कीकटेश्वरस्य यशोभिः विभीषिता वित्रासिता तमस इयं तामसी मसी तमोमालिन्यं इदं यशांस्येतत्कीर्तीर्द्विषतो विरुन्धानस्य । द्विषोऽमित्र इति शतृप्रत्ययः । "द्विषः शतुर्वा वचनम्" इति विकल्पात् षष्ठीप्रतिषेधे कर्मणि द्वितीया । सुधारुचः सुधांशोरङ्कं किं धावति? गच्छति किम्? तथा एतत्कीर्तिर्द्विषत एतद्द्विषत एतच्छत्रोराननञ्च धावति किम्? एतद्यशश्चन्द्रिकाभयात्तमश्चन्द्रकलङ्कमेतच्छत्रुमुखञ्च प्रविष्टमित्युत्प्रेक्षते । अन्यथा कथमनयोरजस्रमीदृङ्मालिन्यमिति भावः ॥ ८९ ॥

**इदमिति** ॥ इदं नृपप्रार्थिभिरिमं नृपमेव प्रार्थयमानैरर्थिभिरुज्झितो रोहणो रोहणाद्रिः मणिप्ररोहेण । नवरत्नाङ्कुरोद्भेदेन विवृध्य अव्ययीभावाद्वर्धित्वा कियद्दिनैः कतिपयदिनैरेवाम्बरमाकाशमावरिष्यते आच्छादयिष्यति । मुनिरगस्त्यो मुधा वृथैव विन्ध्यं भूधरमरुद्धस्तम्भयामास । रोहणस्य तत्कार्यकारित्वादिति भावः । अत्र रोहणाद्रेरीदृग्वृद्ध्यसम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥

**भूशक्रस्येति** ॥ भूशक्रस्य भूदेवेन्द्रस्य एतस्य राज्ञः सम्बन्धीनि विक्रमभरेण पराक्रमातिशयेन क्रमादुपार्जितानि महेभदशनस्पर्धीनि गजेन्द्रदन्तसवर्णानि यशांसि कैरक्षरैर्वाग्भिः स्तुमहे स्तोतुंशक्यानीत्यर्थः । तथाहि लिम्पद्भिः

लिम्पद्भिः कृतकं कृतोऽपि रजतं राज्ञां यशःपारदै-

रस्य स्वर्णगिरिः प्रतापदहनैः स्वर्णं पुनर्निर्मितः ॥ ९१ ॥

यद्भर्तुः कुरुतेऽभिषेणनमयं शक्रो भुवः सा ध्रुवं

दिग्दाहैरिव भस्मभिर्मघवता सृष्टैर्धृतोद्धूलना ।

शम्भोर्मा बत सन्धिवेलनटनं भाजि व्रतं द्रागिति

क्षोणी नृत्यति मूर्तिरष्टवपुषोऽसृग्वृष्टिसन्ध्याधिया ॥९२॥

प्रागेतद्वपुरामुखेन्दु सृजतः स्रष्टुः समग्रस्त्विषां

कोशः शोषमगादगाधजगतीशिल्पेऽप्यनल्पायितः ।

---

रञ्जद्भिः राज्ञामरिराजानां यशोभिरेव पारदैः रसैः । 'रसः सूतश्च पारदः' इत्यमरः । कृतकं कृत्रिमं रजतं कृतोऽपि स्वर्णगिरिः हेमाद्रिरस्य प्रतापदहनैः पुनः स्वर्णं निर्मितः कृतः । रसलिप्तसुवर्णं रजतसुवर्णं भवति तत्पुनरग्निदाहात् प्रकृतिस्थं भवतीति प्रसिद्धमेव । अत्राप्युक्तरूपासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः ॥ ९१ ॥

**यदिति** ॥ भुवः शक्रो भूदेवेन्द्रोऽयं राजा यस्याः क्षोण्याः भर्तुरभिषेणनं सेनया अभियानं कुरुते । 'यत्सेनयाभिगमनमरौ तदभिषेणनम्' इत्यमरः । अष्टवपुषोऽष्टमूर्तेः शम्भोर्मूर्तिरष्टान्यतमा मूर्तिः सा क्षोणी असृग्वृष्ट्ययामौत्पाकरक्तवर्षे सन्ध्याधिया सन्ध्याभ्रान्त्या, सन्धिवेलायां भवं सान्धिवेलं, सन्धिवेलावृतुनक्षत्रेभ्योऽण् । तच्च तन्नटनञ्च तदेव व्रतं सन्ध्यानाट्यं व्रतं मा भाजि माभञ्जि । भञ्जेः कर्मणि लुङ् । भञ्जेश्च चिणीति विकल्पान्नलोपे उपधावृद्धिः । इति मत्वेति शेषः । इतिकरणादेव गम्यमानार्थत्वादप्रयोगः । मघवता इन्द्रेण सृष्टैरभिवृष्टैर्दिग्दाहैर्दिग्दाहोद्भवैरिव स्थितैः भस्मभिः धृतोद्धूलना कृतभस्मानुलेपना सती द्राक् सपदि नृत्यति ध्रुवमित्युत्प्रेक्षा । एतद्यातव्यराष्ट्रेषु दिग्दाहपांशुवर्षरक्तवृष्टिभूकम्पादयो जायन्ते । तत्रेयमुत्प्रेक्षा ॥ ९२ ॥

**प्रागिति** ॥ एतस्य राज्ञो वपुः प्राक् प्रथममामुखेन्दोरामुखेन्दुमुखावधिकमित्यर्थः । अभिविधावव्ययीभावः । सृजतः स्रष्टुः सम्बन्धी अगाध-

निःशेषद्युतिमण्डलव्ययवशादीषल्लभैरेष वा
शेषः केशमयः किमन्धतमसस्तोमैस्ततो निर्मितः ॥ ९३ ॥

तत्तद्दिग्जैत्रयात्रोद्धुरतुरगखुराग्रोद्धतैरन्धकारं
निर्वाणारिप्रतापानलजमिव सृजत्येष राजा रजोभिः ।
भूगोलच्छायामायामयगणितविदुन्नेयकायो भियाभू-
देतत्कीर्तिप्रतानैर्विधुभिरिव युधे राहुराहूयमानः ॥ ९४ ॥

---

जगतीशिल्पेऽप्यखिलजगन्निर्माणेऽप्यनल्पायितोऽनल्पीभूतोऽक्षीण इत्यर्थः । लोहितादेराकृतिगणत्वात्क्यषि कर्तरि क्तः । प्रत्युत समग्रः त्विषां कोशस्तेजोराशिः शोषं रिक्ततामगात् । ततोऽनन्तरं निःशेषद्युतिमण्डलव्ययवशात् तेजोमात्रनाशवशाल्लभैः सुलभैः तद्धेतुकत्वादुत्पत्तेरिति भावः । ईषद्दुरित्यादिना खल्प्रत्ययः । अन्धयन्तीत्यन्धानि तमांस्यान्धतमसानि गाढान्धकाराः अवसमन्धेभ्यस्तमस इति समासान्तः । तेषां स्तोमैरेष केशमयः केशपाशात्मकः शेषो वपुःशेषो निर्मितः किं वेत्युत्प्रेक्षालङ्कारः । तेन चास्य लोकातिशयतेजो व्यज्यते ॥ ९३ ॥

**तत्तदिति** ॥ एष राजा तासां दिशां जैत्रीषु यात्रासूद्धुराणामुच्छृङ्खलानां तुरगाणां खुराग्रैरुद्धतैः उत्थापितैः रजोभिः (करणैः) निर्वाणाच्छान्तादरिप्रतापानलाज्जातं तज्जमिव शत्रुप्रतापाग्निनिर्वाणजन्यमिव स्थितमित्यर्थः । तदभावहेतुकत्वादन्धकारस्येति भावः । अन्धकारं सृजति रात्रिं कल्पयतीत्यर्थः । अथ राहुरेतस्य कीर्तिप्रतानैः कीर्तिपटलैरेव विधुभिश्चन्द्रैः युधे युद्धायाहूयमानः सन् भिया भूगोलस्य भूबिम्बस्य च्छाया तच्छायम् । विभाषा सेनासुरेत्यादिना नपुंसकत्वम् । तदेव माया कपटं तन्मयः स चासौ गणितविदुन्नेयो गणितशास्त्रैकवेद्यः कायो यस्य सोऽभूत् । ज्योतिःशास्त्र्यमाणकं यद्राहोर्भूच्छायात्मकत्वं तदेतत्कीर्तिचन्द्रभियेत्युत्प्रेक्षा । तया च राहुभीषकत्वेन कीर्तिचन्द्राणां प्रसिद्धचन्द्राद्व्यतिरेको व्यज्यते ॥ ९४ ॥

आस्ते दामोदरीयामियमुदरदरीं याधिशय्य त्रिलोकी
सम्मातुं शक्तिमन्ति प्रथिमभरवशादत्र नैतद्यशांसि ।
तामेतां पूरयित्वा निरगुरिव मधुध्वंसिनः पाण्डुपद्म-
छद्मापन्नानि तानि द्विपदशनसनाभीनि नाभीपथेन ॥ ९५

अस्यासिर्भुजगः स्वकोशविवराकृष्टः स्फुरत्कृष्णिमा
कम्पोन्मीलदराललीलवलनस्तेषां भिये भूभुजाम् ।
सङ्ग्रामेषु निजाङ्गुलीमयमहासिद्धौषधीवीरुधः
पर्वास्ये विनिवेश्य जाङ्गुलिकता यैर्नाम नालम्बत ॥९६॥

---

**आस्त इति** ॥ या इयं त्रिलोकी दामोदरस्येमां वैष्णवीमुदरदरीं कुक्षिकुहरमधिशय्याधिष्ठायास्ते तानि प्रसिद्धानि द्विपदशनसनाभीनि गजदन्त-सन्निभानि एतद्यशांसि प्रथिमभरवशान्महिमातिशयवशात्तत्र त्रिलोक्यां सम्मातुं वर्तितुं न शक्तिमन्त्यशक्तानि सन्ति तामेतां दामोदरदरीं पूरयित्वा मधुध्वंसिनो विष्णोः पाण्डूनि पद्मछद्मापन्नानि नाभिपुण्डरीकव्याजापन्नानि सन्ति तानि नाभीपथेन निरगुरिव निर्गतानीव । अत्र पद्मछद्मना निरगुरिवेति सापह्नवोत्प्रेक्षा । सा च त्रिलोकीयशसोराधाराधेययोरानुरूप्यलक्षणाधिकालङ्कारोत्थापितेति सङ्करः॥

**अस्येति** ॥ स्वकोशान्निजपिधानादेव विवराद्बिलादाकृष्ट उद्धृतः स्फुरत्कृष्णिमा व्यक्तकृष्णवर्णः कम्पेन धूननेनोन्मीलन्ती अराललीला वक्रविलासा यस्य तद्वलनं सङ्गतिः यस्य सः प्रकटकुलगतिरित्यर्थः । अस्यासिरेव भुजगस्तेषामेव भूभुजां राज्ञां भिये भीतये भवति । यैर्नाम यैः किल सङ्ग्रामेषु निजाङ्गुलिमयी स्वाङ्गुलीरूपा महती सिद्धा अमोघा ओषधिवीरुत् ओषधिलता तस्याः पर्व ग्रन्थिमास्ये विनिवेश्य जाङ्गुलिकता विषवैद्यता नालम्बत । यथा मुखान्तर्गतौषधं गारुडिकः सर्पो न हन्ति, तद्वद्दष्टाङ्गुलीकं न हन्तीत्यर्थः । 'ग्रन्थिर्ना पर्व परुषी, विषवैद्यो जाङ्गुलिकः' इति चामरः । रूपकालङ्कारो व्यज्यत एव ॥ ९६ ॥

यः पृष्ठं युधि दर्शयत्यरिभटश्रेणीषु यो वक्रता-
मस्मिन्नेव बिभर्ति यश्च किरति क्रूरध्वनिं निष्ठुरः ।
दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन् गुणं
विख्यातः स्फुटमेक एष नृपतिः सीमा गुणग्राहिणाम् ॥

अस्यारिप्रकरः शरश्च नृपतेः सङ्ख्ये पतन्तावुभौ
सीत्कारश्च न सम्मुखौ रचयतः कम्पश्च न प्राप्नुतः ।
तद्युक्तं न पुनर्निवृत्तिरुभयोर्जागर्ति यन्मुक्तयो-
रेकस्तत्र भिनत्ति मित्रमपरश्चामित्रमित्यद्भुतम् ॥ ९८ ॥

---

**य इति** ॥ यश्चापः युधि अरिभटयोः श्रेणीषु पृष्ठं कायपश्चाद्भागं दर्शयति । योऽस्मिन्नेव स्वस्वामिन्येव विषये वक्रतामनार्जवं बिभर्ति ताभ्य इत्यर्थः । योऽस्मिन्नेव निष्ठुरः परुषः सन् क्रूरध्वनिं कर्णकठोरमशब्दञ्च किरति दोषं भुजं भजत आश्रयतः । 'भुजवाहू प्रवेष्टो दोः' इत्यमरः । दोषमकार्यमाचरतश्च तथाविधस्य तस्य चापस्य गुणं ज्यां जैत्रत्वादिकञ्च गृह्णन् स्वीकुर्वन्नेष नृपतिः कीकटेन्द्रः एक एव गुणग्राहिणां सीमा अवधिः स्फुटं व्यक्तं विख्यातः । अत्र गुणग्राहिसीमात्वस्य पूर्ववाक्यार्थहेतुकत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥

**अस्येति** ॥ अस्य नृपतेररिप्रकरः शत्रुसङ्घः शरश्चोभौ सङ्ख्ये युगपत् सम्मुखौ परस्पराभिमुखौ पतन्तौ सीत्कारञ्च न रचयतः । दुःखनिर्गत्यो-रभावादिति भावः । कम्पञ्च न प्राप्नुतः । भयदुष्प्रयोगयोरभावादिति भावः । किञ्च मुक्तयोः एकत्र संसारादन्यत्र शापाच्चेति भावः । उभयोः अरिशरयोः न पुनर्निवृत्तिर्जागर्ति भवतीति यत् तद्युक्तम् । एकत्रागमादपरत्र प्रत्यक्षाच्चेति भावः । किन्तु तत्र तयोः मध्ये एकोऽरिसङ्घो मित्रं सूर्यं भिनत्ति । अपरः शरस्त्वमित्रं भिनत्तीत्यद्भुतम् । अत्रामित्रं भिनत्तीत्युक्तम् । मित्रं न भिनत्तीति च प्रतीयते । तद्रणे अभिमुखपतितस्तस्य विरोधादद्भुतम् । द्वावेतौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः" इति

धूलीभिर्दिवमन्धयन् बधिरयन्नाशाः खुराणां रवै-
र्वातं संयति खञ्जयन् जवजयैः स्तोतॄन् गुणैर्मूकयन् ।
धर्माराधनसन्नियुक्तजगता राज्ञाऽमुनाधिष्ठितः
सान्द्रोत्फालमिषाद्विगायति पदा स्प्रष्टुं तुरङ्गोऽपि गाम् ॥

एतेनोत्कृत्तकण्ठप्रतिसुभटनटारब्धनाटाद्भुतानां
कष्टं द्रष्टैव नाभूद्भुविसमरसमालोकिलोकास्पदेऽपि ।
अश्वैरस्वैरवेगैः कृतखुरखुरलीमङ्क्षुसंक्षुभ्यमान-
क्ष्मापृष्ठोत्तिष्ठदन्धङ्करणरणधुरारेणुधारान्धकारात् ॥ १००

---

स्मृतेः । मित्रमण्डलभेदनस्य वीरपुरुषायत्तत्वेन अमित्रं शत्रुं भिनत्तीत्यविरोधा-द्विरोधाभासोऽलङ्कारः ॥ ९८ ॥

**धूलिभिरिति** ॥ संयति युद्धे धूलीभिः खुराणां धूलिभिः दिवमन्धयन् अन्तरिक्षचारिणां दृष्टीः प्रतिबध्नन्नित्यर्थः । खुराणां रवैः शब्दैः आशास्तत्रत्यान् प्राणिन इत्यर्थः । बधिरयन् बाधिरीकुर्वन् जवजयैः वेगातिशयैः वातं खञ्जयन् पङ्गूकुर्वन् वायोरप्यधिकवेग इत्यर्थः । गुणैर्लक्षणैः स्तोतॄन्मूकयन्मूकीकुर्वन् स्तोतुमशक्यगुण इत्यर्थः । धर्माराधनसन्नियुक्तजगता जगतो धर्मैकसाधन-कारिणाऽमुना राज्ञा अधिष्ठितोऽधिरूढस्तुरङ्गोऽपि सान्द्रोत्फालमिषात् आयत-प्लुतव्याजान्निरन्तरमूर्ध्वंचरणनिक्षेपव्याजादित्यर्थः । पदा एकेनापि चरणेनेति वेगातिशयोक्तिः । गां भुवं धेनुञ्च विगायति विगर्हते । किमुतान्ये जना इत्यर्थः। गोब्राह्मणानलान् भूमिं गोच्छिष्टं न पदा स्पृशेदिति निषेधादिति भावः ॥ ९९ ॥

**एतेनेति** ॥ समरसमालोकिलोकास्पदे युद्धप्रेक्षकजनालयेऽपि भुवि भूतले अस्वैरवेगैरमन्दवेगैः । 'मन्दसच्छन्दयोः स्वैरम्' इत्यमरः । अश्वैः कृताभिः खुरखुरलीभिः खुरसञ्चारैः मङ्क्षु सपदि संक्षुभ्यमानात् सञ्चूर्ण्यमानात् क्ष्मापृष्ठाद्भूतलादुत्तिष्ठतामुत्पततां अनन्धाः अन्धाः क्रियन्ते एभिरित्यन्धङ्करणाः तेषां आढ्यसुभगेत्यादिना ख्युन्प्रत्ययः । रणस्य धूरग्रं रणधुरा । ऋक्पूरित्या-

उन्मीलल्लीलनीलोत्पलदलदलनामोदमेदस्विपूर-
क्रोडक्रीडद्विजालीगरुदुदितमरुत्स्फालवाचालवीचिः ।
एतेनाखानि शाखानिवहनवहरित्पर्णपूर्णद्रुमाली-
व्यालीढोपान्तशान्तव्यथपथिकदृशां दत्तरागस्तडागः १०१

वृद्धो वार्द्धिरसौ तरङ्गवलिभं बिभ्रद्वपुः पाण्डुरं
हंसालीपलितेन यष्टिकलितस्तावद्वयो बंहिमा ।
बिभ्रच्चन्द्रिकया च कं विकचया योग्यस्फुरत्सङ्गतं
स्थाने स्नानविधायिधार्मिकशिरोनत्यापि नित्यादृतः ॥१०२

---

दिना समासान्तः । तस्यां रेणूनां धारा सन्ततिः सैवान्धकारस्तस्माद्धेतोरेतेन राज्ञा उत्कृत्तकण्ठैः छिन्नकण्ठैः प्रतिसुभटैः परवीरैरेव नटैर्नर्तकैरारब्धानामाचरितानां नाट्याद्भुतानां कबन्धनृत्यानामित्यर्थः । कष्टं वत द्रष्टैव नाभूत् न विद्यते स्म ॥ १०० ॥

**उन्मीलदिति** ॥ उन्मीलल्लीलानां स्फुरद्विलासानां नीलोत्पलदलानां दलनेन विकासेन य आमोदस्तेन मेदस्विनि पूरक्रोडे जलराशेरुपरि क्रीडन्तीनां द्विजालीनां पक्षिगणानां गरुदुदितस्य पक्षोत्थस्य मरुतः स्फालेनास्फालनेन वाचालवीचिर्मुखरतरङ्गः शाखानिवहेषु नवैर्हरिद्भिः हरितवर्णैः पर्णैः पूर्णाभिः द्रुमालीभिर्व्यालीढैरुपान्तैः प्रान्तैः शान्तव्यथानां शमितसन्तापानां पथिकदृशां दत्तरागो जनितह्लादस्तडाग एतेन राज्ञा अखानि खात इति पूर्तधर्मोक्तिः ॥१०१

पुनस्तडागमेव वर्णयति—**वृद्ध इति** ॥ तरङ्गैर्वलिभं वलियुक्तम् । "तुन्दिवलिवटेर्भ" इति मत्वर्थीयो भप्रत्ययः । हंसाल्येव पलितं शुक्लकेशत्वम् । 'पलितं जरसा श्लौक्यं केशादौ' इत्यमरः । तेन पाण्डुरं वपुर्बिभ्रत् यष्टिः प्रणालीस्तम्भः आलम्बदण्डश्च तया कलितोऽवष्टब्धस्तावान् वयोबंहिमा पक्षिबाहुल्यं बाल्याद्यवस्था बाहुल्यञ्च यस्य सः । प्रियस्थिरेत्यादिना बहुलशब्दस्य बंह्यादेशः । 'खगबाल्यादिनोर्वयः' इत्यमरः । विकचया स्फुटया विलुप्तकेशया

तस्मिन्नेतेन यूना सह विहर पयःकेलिवेलासु बाले!
नालेनास्तु त्वदक्षिप्रतिफलनभिदा तत्र नीलोत्पलानाम् ।
तत्पाथो देवतानां विशतु तव तनुच्छायमेवाधिकारे
तत्फुल्लाम्भोजराज्ये भवतु च भवदीयाननस्याभिषेकः ॥

एतत्कीर्तिविवर्तधौतनिखिलत्रैलोक्यनिर्वासितै-
र्विश्रान्तिः कलिता कथासु जरतां श्यामैः समग्रैरपि ।

---

च चन्द्रिकया ज्योत्स्नया शिरोरोगविशेषेण च सह योग्यं स्फुरच्च सङ्गतं सम्बन्धो यस्य तत् । एकत्र तत्सदृशमन्यत्र तद्युक्तश्चेत्यर्थः । कं जलं शिरश्च बिभ्रत् । 'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः' इत्यमरः । स्नान-विधायिनां स्नानाद्यनुष्ठातॄणां धार्मिकाणां धर्मचारिणां धर्मम् । चरतीति ठक् । शिरसां नत्या नमनेन निमज्जनेन नमस्कारेण च नित्यमादृतः तत्कृतोऽसावयं वार्धिस्तडागो वृद्धः स्थविरोऽतिपूर्णश्च स्थाने युक्तं, 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः । रूपकालङ्कारः ॥ १०२ ॥

**तस्मिन्निति** ॥ हे बाले! तस्मिंस्तडागे यूना एतेन राज्ञा सह विहर । पयःकेलिवेलासु जलक्रीडाकालेषु तत्र तडागे नीलोत्पलानां त्वदक्ष्णोः प्रति-फलनात् प्रतिबिम्बनात् भिदा भेदः । षिद्भिदादिभ्योऽङ् । नालेनास्तु नालमेव भेदकमस्त्वित्यर्थः । तव तनोः च्छाया तनुच्छायं कायकान्तिः । विभाषा सेने-त्यादिना नपुंसकत्वम् । तस्य तडागस्य पाथोदेवतानां जलदेवतानामधिकारे आधिपत्ये विशतु आधिपत्यं करोत्वित्यर्थः । भवदीयाननस्य तस्य फुल्लाम्भो-जानां राज्ये अभिषेको भवतु । त्वन्नेत्रादिकं त्वदीयोत्पलादिकमतिशय्यवर्तिष्यत इत्यर्थः ॥ १०३ ॥

**एतदिति** ॥ एतस्य राज्ञः कीर्तिविवर्तैः यशोविलासैः धौतात् क्षालिता-न्निखिलत्रैलोक्यात् निर्वासितैः निष्कासितैः समग्रैः समस्तैरपि श्यामैः श्याम-वस्तुभिर्जरतां वृद्धानाम् । 'प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि'

जज्ञे कीर्तिमयादहो भयभरैरस्मादकीर्तेः पुनः
सा यन्नास्य कथापथेऽपि मलिनच्छाया बबन्ध स्थितिम् ॥

अथावदद्भीमसुतेङ्गितात् सखी जनैरकीर्तिर्यदि वास्य नेष्यते ।
मयापि सा तत् खलु नेष्यते परं सभाश्रवःपूरतमालवल्लिताम् ॥

अस्य क्षोणिपतेः परार्धपरया लक्षीकृताः सङ्ख्यया
प्रज्ञाचक्षुरवेक्ष्यमाणतिमिरप्रख्याः किलाकीर्तयः ।
गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरा-
न्मूकानां प्रकरेण कूर्मरमणी दुग्धोदधे रोधसि ॥ १०६ ॥

---

इत्यमरः । "जीर्यतेरतृन्" इत्यतृन्प्रत्ययः । कथासु विश्रान्तिः कलिता । एतद्यशोव्याप्त्या श्यामवस्तुजातं कथामात्रशेषमासीदित्यर्थः । अकीर्तेः पुनः अपकीर्तेस्तु कीर्तिमयात् कीर्त्यात्मकादस्मान्नृपाद्भयभरैः भयराशिभिर्जज्ञे जातम् । भावे लिट् । अकीर्तिरस्मादभैषीदित्यर्थः । कुतः यद्यस्मादस्य सम्बन्धिनी मलिनछाया अपकीर्तिः कथापथेऽपि वाङ्मार्गेऽपि स्थितिं न बबन्ध यतो ऽकीर्तिकथापि न श्रूयते । तदियमेतद्भयात् क्वापि गतेत्युत्प्रेक्षते । अकीर्ति-लेशोऽप्यस्य नास्तीत्यर्थः ॥ १०४ ॥

**अथेति** ॥ अथ सखी भीमसुताया इङ्गितात् इङ्गितज्ञानादवदत् । किमित्याह—अस्याकीर्तिर्जनैर्नेष्यते नाङ्गीक्रियते यदि । इषेः कर्मणि लट् । तत्तर्हि मयाऽपि सा तदकीर्तिः सभायाः श्रवःपूरः कर्णावतंसो या तमालवल्लिता तां परं भृशं नेष्यते प्रापयिष्यते खलु? नयतेः कर्मणि लट् । अहमस्यापकीर्तिं सभां श्रावयिष्यामीत्यर्थः ॥ १०५ ॥

स्वयं श्रावयति—**अस्येति** ॥ परार्धं चरमा सङ्ख्या ततोऽपि परया सङ्ख्यया लक्षीकृता विषयीकृताः तत्सङ्ख्याता इत्यर्थः । प्रज्ञैव चक्षुर्येषां ते प्रज्ञाचक्षुषो जात्यन्धाः तैर्लक्ष्यमाणं तदेकग्राह्यं यत्तिमिरं तत्प्रख्यास्तत्सङ्काशाः अस्य क्षोणीपतेः अकीर्तयः अष्टमं स्वरं षड्जादिस्वरसप्तकात्परं स्वरं कलयता

तदक्षरैः सस्मितविविस्मिताननां निपीय तामीक्षणभङ्गिभिः सभाम् ।
ईहास्य हास्यं किमभून्न वेति तं विदर्भजा भूपमपि न्यभालयत् ॥

नलान्यवीक्षां विदधे दमस्वसुः कनीनिकागः खलु नीलिमालयः ।
चकार सेवां शुचिरक्ततोचितां मिलन्नपाङ्गः सविधे तु नैषधे ॥

---

प्रयुञ्जानेन वन्ध्याया अनपत्याया उदराज्जातेन मूकानां प्रकरेण सङ्घेन कूर्म-रमणीनां कूर्मस्त्रीणां दुग्धानि क्षीराणि तेषामुदधेरब्धेः रोधसि तीरे गीयन्ते किल ? तत्कथं जनैर्नाकर्ण्यन्तेत्यर्थः । एतेनास्याकीर्तिलेशोऽपि खपुष्पकल्प इति स्तुतेः परा काष्ठा किन्त्वफलत्वादलमिति भावः । अत्र निन्दया स्तुतिप्रतीते-र्व्याजस्तुतिभेदालङ्कारः ॥ १०६ ॥

**तदिति** ॥ विदर्भजा वैदर्भी तस्या अक्षरैर्वाक्यैः सस्मितानि विस्मितानि आननानि यस्यास्तां सभामीक्षणभङ्गिभिर्दृष्टिप्रकरैः निपीय सस्पृहं दृष्ट्वा इहैतद्वाक्ये अस्य कीकटेश्वरस्यापि हास्यं स्मितमभूत् किं वानाभूत् इति अयमपि हसति न वेति तं भूपमपि न्यभालयत् आलोकयत् ॥ १०७ ॥

**नलेति** ॥ नीलिम्नो नैल्यस्य मालिन्यस्य चालय आश्रयो दमस्वसुः दमयन्त्याः कनीनिका तारका । 'तारकाक्ष्णः कनीनिका' इत्यमरः । नलादन्यस्य पुंसः वीक्षां वीक्षणम् । गुरोश्च हल इति स्त्रियामप्रत्यये टाप् । तदेवागोऽपराधः पापञ्च विदधे । 'आगः पापापराधयोः' इत्यमरः । मलिनात्मनो हि मलिन-कृत्यमेवाचरन्तीति भावः । अपाङ्गस्तु सविधे समीपस्थे नैषधे अलीकनले मिलन् सक्तः शुचिरक्तः श्वेतरक्तो निर्मलोऽनुरक्तहृदयश्च तस्य भावस्तत्ता तदुचितां सेवां भजनं चकार । साधवः साध्वेवाचरन्तीति भावः । एतेन कीकटपतावृजुदृष्टिपातादनुरागाभावो नैषधे तद्वैपरीत्यादनुरागश्चेति गम्यते । अत एव कीकटवीक्षणमपि सखीवाक्यनिमित्तहास्यानुसन्धानलौल्यादित्यदोषः ॥

दृशा नलंस्य श्रुतिचुम्बिनेषुणा करेऽपि चक्रछलनम्रकार्मुकः ।
स्मरः पराङ्गैरनुकल्प्य धन्वितां जनीमनङ्गः स्वयमार्दयत्ततः ॥

उत्कण्टका विलसदुज्ज्वलपत्रराजि-
रामोदभागनपरागतराऽतिगौरी ।
रुद्रक्रुधस्तदरिकामधिया नले सा
वासार्थितामधृत काञ्चनकेतकीव ॥ ११० ॥

तत्रालीकनले चलेतरमनाः साम्यान्मनागप्यभू-
दप्यग्रे चतुरः स्थितान्न चतुरा पातुं दृशा नैषधान् ।

---

तदा नलोऽपि तां सानुरागमवैक्षत इत्याह—**दृशेति** ॥ स्वयमनङ्गो-ऽङ्गरहितः स्मरो नलस्य दृशा दृष्ट्यैव श्रुतिचुम्बिना कर्णान्तकृष्टेनेषुणा (करणेन) तथा करे नलस्यैव करे चक्रछलेन चक्ररेखाव्याजेन नम्रकार्मुकः कुटिलकोदण्डो यस्य सः । अत एव पराङ्गैर्नलाङ्गैः परकीयसाधनैरेव धन्वितां धानुष्कत्वमनुकल्प्य काशकुशवद्धानुकल्पं सम्पाद्य ततो जनीं वधूमार्दयदपीडयत् ॥ १०९ ॥

**उत्कण्टकेति** ॥ उत्कण्टका उद्गतपुलका अन्यत्रोद्गप्रसूचिका विलसन्ती उज्ज्वला पत्रराजिः पत्ररचना अन्यत्र दलपङ्क्तिः यस्याः सा आमोदं गन्धं हर्षं च भजतीति आमोदभाक् । भजो ण्विः । 'आमोदो गन्धहर्षयोः' इति विश्वः । अपगतरागा न भवतीत्यनपरागा, अन्यत्राविद्यमानरागा न भवतीत्यनपरागा । उभयत्राप्यतिशयार्थे तरप् । गौरीमतिक्रान्ता गुणैरित्यतिगौरी अत्यन्तगौरवर्णेति चोभयत्रापि योज्यम् । सा दमयन्ती रुद्रक्रुधः रुद्रे क्रोधात् गौरी स्वपरित्यागरोषात्तदरिकामधिया रुद्रशत्रुकामभ्रान्त्या आगता काञ्चनवर्णा केतकी काञ्चनकेतकीवेत्युत्प्रेक्षा । नले वासार्थितां निवासाकाङ्क्षां अधृत धृतवती । धृतेः कर्तरि लुङ् स्वरितेत्त्वात्तङ् ॥ ११० ॥

**तत्रेति** ॥ चतुरा प्रवीणापि सा दमयन्ती तत्र तस्मिन्नलीकनले साम्यादात्यन्तिकसत्यनलसादृश्याच्चलेतरमना निश्चलचित्ता सती आनन्दाम्बुनिधौ

आनन्दाम्बुनिधौ निमज्य नितरां दूरङ्गता तत्तला-

लङ्कारीभवनाज्जनाय ददती पातालकन्याभ्रमम् ॥ १११ ॥

सर्वस्वं चेतसस्तां नृपतिरपि दृशे प्रीतिदायं प्रदाय

प्रापत्तद्दृष्टिमिष्टातिथिममरदुरापामपाङ्गोत्तरङ्गाम् ।

आनन्दान्ध्येन वन्ध्यानकृत तदपराकूतपातान् स रत्याः

पत्या पीयूषधारावलनविरचितेनाशुगेनागुलीढः ॥११२॥

---

निमज्य नितरां दूरं गता तलं प्राप्ता तस्य तलस्य अलङ्कारीभवनादाभरणीभावात्तत्रावस्थानादित्यर्थः । जनायालोकजनाय पातालकन्याभ्रमं ददती सागरतलस्यैव पातालत्वात्तत्रस्था तल्लोकस्त्रीति भ्रान्तिं जनयतीत्युक्तम् । अग्रे स्थितानपि चतुरो नैषधानिन्द्रादिमायानलान् सत्यनलस्तु तदन्त उपवेशनादपुरोवर्तीति भावः । मनागीषदपि दृशा पातुं द्रष्टुं नाभूत् नाकल्पत । शकधृषेत्यादिना अस्त्यर्थयोगात्तुमुन् । निरन्तरध्यानासादितनलसाक्षात्कारानन्दपारवश्यादिषुकारवत् पुरोवर्तिनोऽपि पुरन्दरादिमायानलानद्राक्षीदित्यर्थः ॥ १११ ॥

एवं दमयन्त्या अलीकनलसाक्षात्कारमुक्त्वा नलस्याप्यलीकदमयन्ती साक्षात्कारमाह—**सर्वस्वमिति** ॥ अथ नृपतिः अलीकनलोऽपि चेतसो हृदयस्य सर्वस्वं सर्वधनभूतां हृदयादनपेतामित्यर्थः । तां दमयन्तीं दृशे स्वचक्षुषे प्रीतिदायं पारितोषिकदानम् । 'दायो दाने यौतकादिधने वित्ते च पैतृक' इति वैजयन्ती । प्रदाय निरन्तरध्यानेन तां साक्षात्कृत्वेत्यर्थः । अथामरैरपि दुरापां दुष्प्रापामपाङ्गैरुत्तरङ्गां तरङ्गितां तस्याः (कन्यायाः) दृष्टिं तद्दृष्टिमेवेष्टातिथिं प्रियबन्धुं प्रापत् लब्धवान् । स्वयं च तया कटाक्षेण वीक्षित इत्यर्थः । अथ स नृपो रत्याः पत्या कामेन पीयूषधारावलनविरचितेन अमृतधारानिष्यन्दलिप्तेनाशुगेन तद्दृष्टिरूपेणेत्यर्थः । आगुलीढः विद्धः सन् आनन्देनान्ध्यं मोहं पारवश्यमिति यावत् । तेन तदपरान् प्रथमदृष्टिपातानन्तरभाविन आकूतेन

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
तस्य द्वादश एष मातृचरणाम्भोजालिमौलेर्महा-
काव्येऽयं व्यगलन्नलस्य चरिते सर्गो निसर्गोज्ज्वलः ॥

---

सहितान् साकूतदृष्टिपातान् वन्ध्यानफलानकृत कृतवान् । प्रथमदृष्टिपातजनिता-नन्दपारवश्यादनन्तरदृष्टिपातान्न विवेदेत्यर्थः ॥ ११२ ॥

**श्रीहर्षमित्यादि** ॥ मातृचरणाम्भोजयोरलिमौलेर्भृङ्गायमाणमौले-रित्यर्थः ॥ ११३ ॥

इति पदवाक्यप्रमाणपारावारपारीणश्रीमहामहोपाध्यायकोलाचल-
मल्लिनाथसूरिविरचिते नैषधव्याख्याने जीवातुसमाख्याने
द्वादशः सर्गः समाप्तः ।